॥श्रीकाशीपुरीमेआदि विश्वेश्व
केगलीमेश्रीयुतबाबूसाहेबबा
अग्निहोत्रीकेगणेशयंत्रालय
लिखालछमनचौबेछापनेवा
राजगणेसपरदाऊपोथीवालेके

रकेपासमहल्लाघुघुरानास्यामा
बूहरखचंदजीकेबाड़ेमेदाऊ॰
मेदानचंद्रिकाछापीगईसूची
लाघुरविनजिसेलेनाहोपढुंढ
दुकानमेमिलेगी ॥ ९ ॥

# दानचंद्रिकानुक्रमणिका लिख्यते

दा०स्र०
१



दाम:
१

# दानचंद्रिकानुक्रमाणिलिख्यते

| २६ | ३६ | यन | ाय | य | दंता | | य· ३५ | १६ |
|---|---|---|---|---|---|---|---|---|
| रोगाय २५ | पापाय· | म: २३ | नमः २२ | नमः २१ | यनमः २० | यनमः १९ | दौवारिकाय | पितृभ्यो १७ |

## दानचंद्रिकानुक्रमणिका लिख्यते



रामः

३

रा० सू० ४

चरक्यै४७ ईशानायनमः

स्कंदायन. ५७ पूर्वेंद्राय

ॐ अग्नये पांचिवे अग्नये ५८

| शिखिने १ | पर्जन्याय २ | जं० यं० | कुलिशाय | सूर्याय | स० त्या० | भृ० शा० | आकाशाय ८ | वायवे ९ |
|---|---|---|---|---|---|---|---|---|
| दितये नमः ३३ | आपाय नमः ३४ | ता० य० ३ | युधाय ४ | नमः ५ | पृ० ६ | य० ७ | सावित्राय १४ | पूष्णे १० |
| अदितयेनमः |  | आपवत्साय | अर्यम्णेनमः ३७ |  |  | सवित्रे | वितथायनमः ११ |  |
| सर्पायनमः ३० |  | पृथ्वीधरायनमः ४२ |  |  |  | विवस्वतेनमः ३९ | गृहक्षताय १२ |  |
| सोमाय २९ |  |  | इन्द्रजयाय ४६ | इन्द्राय ४५ |  |  | यमायनमः १३ |  |
| भल्लाटाय २८ |  |  |  |  |  |  | गंधर्वायनमः |  |
| मुख्याय २७ |  | राजयक्ष्म ४३ | मित्रायनमः ४१ |  |  | विबुधाधि ४० | भृंगराजाय १५ |  |
| अहये | रुद्राय | ... | ... | ... | ... | ... | ... | ... |

पिलिपिञ्जाय ५९ सोमाय

ॐ पूतनायै नमः ५९ दक्षिणे

॥श्रीगणेशाय नमः॥

॥ श्रीगणेशायनमः ॥ श्रीशारदायैनमः ॥ प्रणम्यमातरंगङ्गांभैरवंवनशङ्करीम् ॥ महादेवाख्यपितरंश्रौतस्मार्तविशारदम् ॥ १ ॥ दिवाकरेणसुधियासारमुद्धृत्यशास्त्रतः ॥ शिष्टानांतनुतेतुष्टैदानसंक्षेपचन्द्रिका ॥ २ ॥ तत्र परस्वत्वोत्पत्त्यन्तो द्रव्यत्यागोदानम् ॥ देवलः अर्थानामुदितेपात्रेश्रद्धयाप्रतिपादनम् । दानमित्यभिनिर्दिष्टंव्याख्यानन्तस्यकथ्यते ॥ ३ ॥ तच्चदानन्त्रिविधोक्तंगीतासु । दातव्यमितियद्दानंदीयतेनुपकारिणे ॥ देशेकालेचपात्रेचतद्दानंसात्विकंस्मृतम् ॥ ४ ॥ यत्तुप्रत्युपकारार्थम्फलमुद्दिश्यवापुनः ॥ दीयतेचपरिक्लिष्टंतद्राजसमुदाहृतम् ॥ ५ ॥ अदेशकालेयद्दानमपात्रेभ्यश्चदीयते ॥ असत्कृतमवज्ञातंतत्तामसमुदाहृतम् ॥ ६ ॥ ॥ गारुडे ॥ ॥ अर्हतेयत्सुवर्णादिदानंतत्कायिकंस्मृतम् ॥ तुलादानादि ॥ आर्तानामभयंदद्यात्येतद्विवाचकंस्मृतम् ॥ विद्यामादाययज्जप्यैतद्दानंमानसंद्विजा इति ॥ ॥ अथ पात्रंयाज्ञवल्क्यः ॥ ॥ नविद्ययाकेवलयातपसावापिपात्रता ॥ यत्रदानमिमेचोभेतद्धिपात्रंप्रचक्षते इति ॥ ॥ भविष्ये ॥ किंचिद्वेदमयम्पात्रंकिंचित्पात्रंतपोमयम् ॥ पात्राणामुत्तमम्पात्रंशूद्रान्नंयस्यनोदरे इति ॥ ॥ व्यासः ॥ ॥ प्रथमंतुगुरोर्दानंदत्वाश्रेष्ठमनुक्रमात् ॥ ततोन्येषांचविप्राणांदद्यात्पात्रानुसारत इति ॥ भविष्यपुराणे ॥ ॥ सन्निधानस्थितान्विप्रान्दौहित्रंविट्पतिं तथा ॥ भागिनेयंविशेषेणतथाबंधून्गृहागतान् ॥ नातिक्रमेन्नरस्त्वेतान्सुमूर्खानपिगोपते ॥ अतिक्रम्यमहारौद्रंरौरवंनरकंव्रजेत् ॥ ॥ दक्षः ॥ ॥ सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे ॥ सहस्रगुणमाचार्येत्वनंतंवेदपारगे । ।अब्राह्मणलक्षणमाहव्यासः॥ ॥ ब्रह्मबीजसमुत्पन्नो

मंत्रसंस्कारवर्जितः ॥ जातिमात्रोपजीवीचभवेद्ब्राह्मणःसतु ॥ ॥ब्राह्मणब्रुवलक्षणमाहतत्रैव ॥ । गर्भाधानादिभिर्युक्तस्तथोपनयनेनच
नकर्मविन्नचाधीतोसभवेद्ब्राह्मणब्रुवः ॥ ॥ अथ द्रव्यविभागः शिवधर्मे ॥ ॥ तस्मात्त्रिभागंवित्तस्यजीवनायप्रकल्पयेत् ॥ भागद्वयं
तुधर्मार्थमनित्यंजीवितंयतः ॥ वित्तस्यभागपंचकंकृत्वाभागत्रयंजीवनार्थंभागद्वयंदानार्थमितिहेमाद्रिः । ॥ अथअग्न्याद्यदानानितस्कां
दे ॥ ॥ अजिनंमृतशय्यांचमेषींचोभयतोमुखीम् ॥ कुरुक्षेत्रेचगृह्णानोनभूयःपुरुषोभवेत् ॥ ॥ मनुः ॥ ॥ हिरण्यंभूमिमश्वंगामन्नंवास
स्तिलान्घृतम् ॥ अविद्वान्प्रतिगृह्णानोभस्मीभवतिकाष्ठवत् ॥ अविद्वान्नामविद्यातपोभ्यांहीनेननग्नाद्यमिति ॥ ॥ अथदानकालः वाराहे ॥
दर्शेशतगुणंदानंतद्दशघ्नंदिनक्षये ॥ शतघ्नंतच्चसंक्रांतौशतघ्नंविषुवेततः ॥ युगादौतच्छतगुणंअयनेतच्छताहतम् ॥ सोमग्रहेतच्छतघ्नंतच्छ
तघ्नंरवेर्ग्रहे ॥ तच्छतघ्नंव्यतीपातेदानंवेदविदोविदुः ॥ ॥ विष्णुधर्मोत्तरे ॥ । वैशाखीकार्तिकीमाघीपौर्णिमातुमहाफला ॥ पौर्ण
मासीषुसर्वासुमासर्क्षसहितासुच ॥ दत्तानामिहदानानांफलंशतगुणंभवेदिति ॥ ॥ अपुण्यदेशः यत्तमनुः ॥ दृषद्वतीसरस्वत्योर्देवन-
द्योर्यदन्तरम् ॥ तंदेवनिर्मितंदेशंब्रह्मावर्तंप्रचक्षते ॥ नारदः ॥ पुण्यदेशेषुसर्वेषुगृहेदेवालयादिषु ॥ यत्रसाधनसम्पत्तिस्तत्रदानंसमा-
चरेत् ॥ भविष्यपुराणे ॥ वाराणसींकुरुक्षेत्रंप्रयागंपुष्करंतथा ॥ गोकर्णंनैमिषारण्यंसेतुंश्रीपर्वतंतथा ॥ महाकालंतथागंगासेतान्पुण्यत-
मान्विदुः ॥ पाद्मे ॥ लिंगंवाप्रतिमांवापीदृश्यतेयत्रकुत्रचित् ॥ तत्सर्वंपुण्यतांयातिदानेषुचमहाफलमिति ॥ एषुदानमतिप्रशस्तमितिहे

माद्रिः ॥ अथतीर्थेप्रतिग्रहनिषेधःपाद्मे ॥ नतीर्थेप्रतिगृह्णीयात्प्राणैःकंठगतैरपीइति ॥ तीर्थेतीरेक्षेत्रेच ॥ गंगाकृष्णागोदावर्यास्तीरमाहविष्णुः ॥ गंगागोदावरीकृष्णातीरमाहुर्महर्षयः ॥ उत्तरेनवगव्यूतिर्दक्षिणेयोजनत्रयमिति ॥ भविष्ये ॥ तीराद्गव्यूतिमात्रंतुपरितःक्षेत्रमुच्यतेइति ॥ गंगायांतुतीरेपिनग्राह्यमित्यर्थः ॥ ब्राह्मे ॥ प्रवाहमवधिंकृत्वायावद्धस्तचतुष्टयम् ॥ तत्रनप्रतिगृह्णीयात्प्राणैःकंठगतैरपीति ॥ प्रवाहोगर्भदानधर्मे ॥ भाद्रशुक्लचतुर्दश्यांयावदाक्रमतेजलम् ॥ तावद्गर्भविजानीयात्तदूर्ध्वंतीरमुच्यतेइति ॥ गर्भप्रतिग्रहनिषेधःप्रसिद्धनदीषु ॥ गंडक्यादिषुतुतीरेनिषेधः। तदुक्तंदानधर्मे ॥ गंडक्यादिषुतीरेपिनग्राह्यंभूतिमिच्छतेतिवचनात् ॥ अत्यन्तायदितीर्थेपिग्राह्यं ॥ अथचेत्प्रतिगृह्णीयाद्ब्राह्मणोवृत्तिकर्शितः ॥ दशांशमर्जितंदद्यादेवंधर्मोनहीयतइतिपाद्मात् ॥ अथ दानकृत्यन्तस्वाराहे सुस्नातःसम्यगाचांतःकृतसंध्यादिकक्रियः । कामक्रोधविहीनस्तुपाखंडस्पर्शवर्जितः । दद्यादितिशेषः ॥ ॥कात्यायनः॥ ॥ कुशोपरिनिविष्टेनतथायज्ञोपवीतिना ॥ देयंप्रतिगृहीतव्यमन्यथाविफलंभवेदिति ॥ ॥गौतमः ॥ अन्तरजानुकरंकृत्वासकुशंसतिलोदकं ॥ फलान्यपिचसंधायप्रदद्याच्छ्रद्धयान्वितः ॥ नामगोत्रेसमुच्चार्य प्राङ्मुखोदेयकीर्तनात् ॥ उदङ्मुखायविप्रायदत्वातंस्वस्तिकीर्तयेत् ॥ सदेवताकदेय कीर्तनानंतरंदत्वेत्यर्थः॥ । अथप्रतिगृहीतकृत्यन्तत्रैव ॥ ॥ ओङ्कारमुच्चरन्प्राज्ञो द्रविणंसकुशोदकं ॥ गृह्णीयाद्दक्षिणेहस्तेतदंतेस्वस्तिकीर्तयेत् ॥ प्रतिगृहीतांसावित्रींसर्वत्रैवानुकीर्तयेत् ॥ सावित्रंदेवस्त्वेति ॥ ततस्तुकीर्तयेत्सार्धमन्द्रव्यंच द्रव्यदेवतां ॥ समा

पयेत्ततःपश्चात्कामस्तुत्याप्रतिग्रहम् ॥ यथाशाखंकद्दंकस्माअदादितिमंत्रंपठित्वेत्यर्थः ॥ ॥ आदित्यपुराणे ॥ ॥ प्रतिग्रहंपठेदुच्चैः-
प्रतिगृह्यद्विजोत्तमात् ॥ मन्दंपठेतुराजन्यादुपांशुंवतथाविशो ॥ मनसाचतथाशूद्रेस्वस्तिवाचनमेवच ॥ ओम्कारंब्राह्मणेकुर्यान्निरोंकार
महीपतौ ॥ उपांशुंचतथावैश्येमनसाशूद्रजेतथेतिकौर्मात् ॥ पुनस्तत्रैव ॥ प्रतिग्रहस्यधर्मज्ञनजानातिद्विजोविधिं ॥ द्रव्यस्तेनसमायु-
क्तोनरकंप्रतिपद्यतइति ॥ तथा ॥ विधिंतुधर्मम्विज्ञायब्राह्मणस्तुप्रतिग्रहे ॥ दातासहतरतेत्रवमहादुर्गाण्यसौध्रुमितियाज्ञवल्क्योक्तेश्च ॥
अथद्रव्यमानम् ॥ ॥ याज्ञवल्क्यः ॥ ॥ जालसूर्यमरीचिस्थन्त्रसरेणुस्ततःस्मृतम् ॥ तेऽष्टौलिक्षास्तुतास्तिस्रोराजसर्षपउच्यते ॥
गौरस्तुतेत्रयःषट्तेयवोमध्यश्चतेत्रयः ॥ कृष्णलःपंचतेमाषास्तेसुवर्णास्तुषोडश ॥ पलंसुवर्णाश्चत्वारःपंचवापरिकीर्तितम् ॥ द्वेकृष्णलेरूप्यमाषो
धरणंषोडशैवते ॥ शतमानंतुदशभिर्धरणैःपलमेवतु ॥ निष्कःसुवर्णाश्चत्वारइतिहेमाद्रिः ॥ अथधान्यमानंभविष्ये ॥ पलद्वयंतुप्रसृतिंकुडु-
वोद्विगुणंमतम् ॥ चतुर्भिःकुडवैःप्रस्थःप्रस्थाश्चत्वारआढकः ॥ आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः ॥ द्रोणैःषोडशभिःखारीविंशत्याकुं
भउच्यते ॥ कुंभैस्तैर्दशभिर्वाहोधान्यमानंप्रकीर्तितमिति ॥ अथदानेदक्षिणापरिमाणमाहव्यासः ॥ सुवर्णंपरमंदानंसुवर्णंदक्षिणापरा ॥
सर्वेषामेवदानानांसुवर्णंदक्षिणेष्यते ॥ अदक्षिणंतुयद्दानंतत्सर्वंनिष्फलंभवेदिति ॥ परेत्युक्तेः ॥ पुरुषाहारोपयिकतंदुलादिकमपिदक्षि
णेतिहेमाद्रिः ॥ तथा ॥ देयद्रव्यतृतीयांशंदक्षिणांपरिकल्पयेत् ॥ अनुक्तदक्षिणादानेदशांशंवापिशक्तितः ॥ भविष्ये । ज्ञेयंनिष्कशतंपार्थदाने

षविधिरुत्तमः ॥ मध्यमस्तु तदर्धेनतदर्धेनाधमःस्मृतः ॥ मेष्यांचकालपुरुषेतथानेत्रपुमहत्सु च ॥ एवंछत्रेरथेजेचधेनोःकृष्णाजिनस्यच ॥ अशक्त
स्यापिकल्पोयंपंचसौवर्णिकोविधिरिति ॥ जपाभिषेकमुदाहृत्यलिंगपुराणे ॥ अष्टषष्टिपलोन्मानंदद्याद्वैदक्षिणांगुरोः ॥ होतॄणांचैवसर्वेषांविं
शत्पलमुदाहृतम् ॥ तदर्धंजापकानांचद्वारपालांस्तदर्धतः ॥ एतेनसर्वत्रगुरोरर्धमृत्विजानांतदर्धंजापकानांतदर्धंद्वारपालानामितिहेमाद्रौदक्षि
णाविभागोऽवगंतव्यः । अथद्रव्यदेवताविष्णुधर्मोत्तरे अभयंसर्वदैवत्यंभूमेर्वैविष्णुदेवता । कन्यादानस्तथादासीप्राजापत्याःप्रकीर्तिताः । प्राजा
पत्योगजःप्रोक्तस्तुरगोयमदैवतः ॥ तथाचैकशफंसर्वंकथितंयमदैवतम् ॥ महिषश्चतथायाम्य उष्ट्रोवैनिर्ऋतोभवेत् ॥ रौद्रोधेनुर्विनिर्दिष्टाछाग
माग्नेयमादिशेत् ॥ मेषंतुवारुणंविद्याद्वारहंवैष्णवंतथा ॥ आरण्याःपशवःसर्वेकथितावायुदेवताः ॥ जलाशयानिसर्वाणिवारिधानंकमंडलु-
म् ॥ कुंभंचकरकंचैववारुणानिनिबोधत ॥ समुद्रजानिरत्नानिवारुणानिद्विजोत्तमाः ॥ आग्नेयंकनकंप्रोक्तंसर्वलोहानिचाप्यथ ॥ प्राजा-
पत्यानिसस्यानि पक्वान्नमपिचेद्विज ॥ संज्ञेयाःसर्वगंधाश्चगंधर्वावैविचक्षणैः ॥ विद्याब्राह्मीविनिर्दिष्टाविद्योपकरणानिच ॥ सारस्वतानिज्ञे
यानिपुस्तकादीनिपंडितैः ॥ सर्वेषांशिल्पभांडानांविश्वकर्मातुदेवता ॥ द्रुमाणामथपुष्पाणांशाकैर्हरितकैस्तथा ॥ फलानामथसर्वेषांतथाज्ञेयो
वनस्पतिः ॥ मत्स्यमांसेविनिर्दिष्टेप्राजापत्येतथैवच ॥ छत्रंकृष्णाजिनंशय्यांरथमासनमेवच ॥ उपानहौतथापात्रंयच्चान्यत्प्राणवर्जितम् ॥
सर्वञ्चांगिरसत्वेनप्रतिगृह्णीतमानवः ॥ शूरोपयोगियत्सर्वंशस्त्रचर्मध्वजादिकम् ॥ नृपोपकरणंसर्वंविज्ञेयंसर्वदैवतम् ॥ गृहंतुशक्रदैवतं

यदनुक्तं द्विजोत्तमाः ॥ विज्ञेयविष्णुदैवत्यं सर्वदा द्विजसत्तमा इति ॥ प्रतिग्रहस्थानानितु गृह्यपरिशिष्टे ॥ प्रतिगृह्णीतगांपुच्छे कर्णेवा हस्ति
नंकरे ॥ मूर्ध्निदासीमजंचैवपृष्ठे ख्वतरगर्दभौ ॥ अश्वंकर्णेमटायांवा अन्नमुद्दिश्यधारयेत् ॥ शय्यासनंगृहंक्षेत्रंसंस्पृश्यादायकाचनम् ॥ उष्ट्रं
चककुदेस्पृष्ट्वामगांश्चमहिषादिकान् ॥ गोवामश्वविधानेनपश्चेसंस्पृश्यपश्चिमाः । छत्रंदंडेतरुंमूलेफलंसगृह्यगौरवात् ॥ प्रगृह्योपानहौ
मंचंवायसेत्प्रतिमुच्यवै ॥ अन्नंचपात्रं ॥ वासस्तथासमादायकन्यांशीर्षेथवाकरे ॥ कन्यायादक्षिणांशमभिस्पृशेदित्यर्थः । रतिभार्यांपरपर्वांप्रति
गृह्णीतचाक्षतां ॥ पृचमत्संगमारोप्यप्रतिगृह्णीतदत्तकं ॥ रथंरथमुखेस्पृष्ट्वाप्रतिगृह्णीतकूबरे ॥ कूबरोयुगाधारकाष्टम् ॥ तथा ॥ हेमाद्रौ
दानखंडे ॥ ॥ भूमेःप्रतिग्रहंकुर्यात्भूमिंकृत्वाप्रदक्षिणां ॥ करेगृहीत्वाकन्यांतदासदास्यौद्विजोत्तमाः ॥ आरुह्यचगजस्योक्तः कर्णेवाश्वस्य
कीर्तितः ॥ तथाचैकशफानांतुसर्वेषांचविशेषतः ॥ प्रतिगृह्णीताजांशृंगेपुच्छेकृष्णाजिनंतथा ॥ येचैकशफाःशृंगिणःस्तान्विशेषतःशृंगे प्रतिगृ
ह्णीयादित्यर्थः ॥ कर्णेचपशवःसर्वे ग्राह्याःपुच्छेविचक्षणैः ॥ गृह्णीयान्महिषंशृंगेखरंवैपृष्टदेशतः ॥ प्रतिग्रहमथोष्ट्रस्ययानानांचाधिरोहणात्
॥ वीजानांमुष्टिमादायरत्नान्यादायसर्वतः ॥ वस्त्रंदशांतादादद्यात्परिधायापिवापुनः ॥ आसन्द्योपानहौमंचमारुह्योवचपादुके ॥ धर्मध्वजौतु
संस्पृश्यगृह्णीयात् ॥ अवतार्यचसर्वाणिजलस्थानानिवैद्विजाः । आयुधानिसमादायतथामुच्यविभूषणं ॥ आमुच्यवध्वेतरर्थः । इति प्रतिगृह्यस्था
नानि ॥अथाद्यौतुलापुरुषदानं ॥ ॥ माहेन्द्रौमात्स्ये ॥ अनेनविधिनायस्तुतुलापुरुषमाचरेत् ॥ प्रतिलोकोधिपस्थाने प्रतिमन्वंतरंवसेत् । विमा

नेनार्कवर्णेनकिंकिणीजालमालिना ॥ पूज्यमानोप्सरोभिश्चततोविष्णुपरंव्रजेत् ॥ कल्पकोटिशतंयावत्तस्मिन्लोकेमहीयते ॥ कर्मक्षयादिह पुनर्भुविराजराजोभूपालमौलिमणिरंजितपादपीठः । श्रद्धान्वितोभवतियज्ञसहस्रयाजीदीप्तप्रतापजितसर्वमहीपलोकः । योदीयमानमपिपश्यतिभूतियुक्तः कालांतरेस्मरतिवाचयतीहलोके ॥ योवाशृणोतिपठतीन्द्रसमानरूपःप्राप्नोतिधामसपुरंदरदेवजुष्टमिति ॥ ॥ तत्रैववह्निपुराणे ॥ एवंदत्वासुवर्णन्तुब्रह्महत्यादिकंचयत् ॥ पापंनिहत्यपरुषःस्वर्गलोकंसगच्छति ॥ तत्रस्थित्वाचिरंराजन्प्रदायातिमहीतले ॥ राजराजेश्वरःश्रीमान्वीतशोकोनिरामयः ॥ रूपसौभाग्यसंपन्नोनितंत्रविष्णुपरायणः ॥ पुनर्विष्णुपदंयातियत्रगत्वानशोचति ॥ ॥ इतिसुवर्णादितुलापुरुषदानफलं ॥ ॥ अथकुंडमंडपादि ॥ ॥ तत्रसुवर्णतुलायामेवावश्यकमितिहेमाद्र्यादयः ॥ रत्नरजततुलायांतुकृताकृतमित्युक्तंतत्रैव ॥ होमाद्यशक्तौतुमंडपादिरहितमेवकुर्यात् ॥ नतत्रसंत्रहोमोवाएवमेवप्रदीयतइतिमात्स्योक्तेः ॥ ग्रहमंत्राद्वारजापमंत्राश्चनेत्यर्थः ॥ अथतुलावेदीपरिमाणंचाहतत्रैव ॥ तत्रादौशुभेन्हिशोभार्थम्कुंडमंडपमात्रंवाकृत्वासप्तहस्तांवापंचहस्तांवातृतीयांशेनचतुर्थांशेनवोच्चांवेदींकृत्वातदुपरिपूर्वपश्चिमयोःस्तंभद्वयंनिखेयं ॥ हेमाद्रौमात्स्ये ॥ शाकेंगुदीचंदनदेवदारुश्रीपर्णिबिल्वप्रियकांचनोत्थं ॥ स्तम्भद्वयंहस्तयुगावखातंकृत्वादृढंपंचकरोच्छ्रतंतत् ॥ तदंतरंहस्तचतुष्टयंस्यादथोत्तरांगंचतुरस्रमेवेति ॥ शाकोवृक्षविशेषोमहासारइतिप्रसिद्धः ॥ श्रीपर्णीभद्रतरुः । प्रियकोजीवकः ॥ सारमतेकदंबः ॥ अंजनःकांचनतुल्यपर्णोवृक्षविशेषः ॥ स्तम्भद्वयचचतुरस्रीकृत्यवेदिमध्ये पूर्वपश्चिमभागयोर्निखेयं ॥

उत्तरांगंस्तम्भयोरुपरि तिर्यक्काष्ठं ॥ तच्चपंचकरयोस्तम्भयोर्हस्तचतुष्टयोपरिनिधेयंचतुरस्रं ॥ अथोत्तरांगंचतदंगमेवेतिपाठेतदीयमितिस्त-
म्भसजातीयकाष्टमित्यर्थः ॥ समानजातिस्चतुलावलंव्याहैमेनमध्येपुरुषेणयुक्ता ॥ दैर्घ्येणमाहस्तचतुष्टयंस्यात्पृथुत्वमस्यास्यदशांगुलानि। सु
वर्णपट्टाभरणाचकार्यासलोहपाशद्वयशृंखलाभिः ॥ युतासुवर्णेनचरत्नमालाविभूषितामाल्यविभूषणाढ्या ॥ समानजातिस्तोरणसमानजा
तिः ॥ तुलोत्तरांगमध्ये द्वादशभिरंगुलैदधस्तादुदगम्ना। अवलंव्यापुरुषेणविष्णुनाष्टं खलाविलं ॥ वितयासुवर्णनिर्मितयातत्प्रतिमालक्ष-
द्वयंन्यस्तयोर्बहिःस्थितमंगुलषट्कंविहायविज्ञेयम् ॥ समतुलायाःअष्टोत्तरशतांगुलमितत्वात्। पृथुत्वंचास्यादृशांगुलपरिमितेनवलयाकृतिस्हृचे-
णसमितंविधेयमित्यर्थः ॥ सलोहपाशद्वयशृंखलाभिर्युक्ताकार्येत्यर्थः ॥ तत्रैववन्हिपुराणे ॥ ॥ आश्वत्थींखादिरींचापिपालाशींवासुपुक्षजां
चतुर्हस्तप्रमाणेनसुश्लक्ष्णांसुदृढांनवां ॥ सुवर्तुलांसमांतद्वत्स्निग्धांछिद्रत्रयान्विताम् ॥ मौंजशिक्यद्वयोपेतांवद्ध्वांस्तंभेषुयाज्ञयइतत्राह ॥
नारदः ॥ चतुरस्रातुलाकार्यापादौचापितथाविधौ ॥ चतुर्ष्वपिचपार्श्वेषुमानंस्याच्चतुरंगुलम् ॥ भुक्तातावत्तु करकावंतयोर्विन्यसेद्बुधः ॥ च-
तुर्हस्ताघटतुलामध्येशृंखलयान्विता ॥ शिक्यंहस्तत्रयंकुर्यात्कुटकंचतुरंगुलमिति ॥ यदाहतत्रैवविश्वकर्मा ॥ विशेषदानंकथितंतुलादितस्या
स्तत्तुलालक्षणमुच्यतेप्राक् ॥ तुलाप्रमाणंस्मृतमंगुलानिदैर्घ्येत्रङ्गुलैःषट्नवतिप्रमाणैः ॥ प्रतिद्वयेप्यङ्गुलषट्कषट्कशतांगुलाष्टोत्तरमंगुलानाम् ॥
स्युर्विंनशतिःपंचचधातुबंधावधेष्वधिष्ठानसुरानिवेश्याः ॥ ईशःशशीमारुतरुद्रसूर्याःस्याद्विश्वकर्मागुरुरंगिरोऽग्नि ॥ प्रजापतिर्विश्वजगद्वि

धातापर्जन्यश्चभूपितृदैवताच ॥ सौम्यस्यधर्मामरराजमश्विनौजलेशमित्रावरुणौमरुद्गणाः ॥ धनेशगंधर्वजलेशविष्णुर्द्वेचतुर्विंशतिरेवदे-
वताः ॥ ॥ अत्रसौम्योबुधः ॥ स्यात्पंचविंशःपुरुषःसएकोयस्तोल्यमानस्तुलयामहात्मा ॥ एताविधेयास्तपनीयमय्योरत्नाचितादैवतमर्त्यस्ताः ।
षडंगुलःस्याच्चतुरस्रपिंडःप्रांतद्वयेविष्णुरनंतनामा ॥ पार्श्वद्वयंतच्चतुरंगुलंस्यादेवंमयातेकथितंप्रमाणं ॥ मध्यांकुटेसंकुलिकांगुलानिपंचाधि-
काविंशतिरेवदैर्घ्ये ॥ एकांगुलःस्याद्भवतोहपिंडस्तत्राधिदेवःकिलवासुकिःस्यात् ॥ ॥ एकैकरज्जुर्लभतेंगुलानित्रिःसप्ततिःपिंडगतांगुलाचत
स्रैलकद्वंद्वमथांगुलानिविंशस्तथापंचदशाधिकास्यात् ॥ तद्धातुबद्धंशुभकाष्ठपीठंपिंडेतथाद्वंद्वमयोविधेयम् ॥ अधोघटोभूम्यधिदेवतास्यात्त
लांतरेभूमिपतिर्निवेश्यइति ।। हेमाद्रौमात्स्योक्तः वेद्यादितुलाष्टतंत्रलक्षणांच ॥ ॥ अथवेद्यांषोडशारचक्रलिखनप्रकारउक्तोमदन-
रत्ने ॥ तत्राचार्योवेद्यांमध्येचिह्नस्तथासंचतुरस्रंप्रसाध्यप्रागपरदक्षिणोत्तरनवरेखाभिश्चतुःषष्टिकोष्टकंकुर्यात् ॥ ॥ तत्रकोष्ठानिप्रत्येकं-
नवनवांगुलानिसंपद्यंते ॥ ॥ ततोवहिरंत्यपंक्तिषुचतर्दिक्षुमध्यकोष्ठानिचत्वारिचत्वारिमार्जयित्वातद्पर्युपांत्यपंक्तिषुपार्श्वयोस्त्रत्रयंत्रयंत्यक्त्वा
प्रतिदिशंप्रतिमध्यकोष्ठद्वयंद्वयंमार्जयेत् ॥ ॥ तच्चतुर्दिक्षुषट्षट्कोष्ठानिचत्वारिद्वाराणिसिध्यंति ॥ ॥ ततोमध्यस्थितषोडशकोष्ठानिमार्ज
येत् ॥ ॥ ततोबाह्येएकैकंकोणकोष्ठंविहायकोणकोष्ठद्वारपीठांतरालवर्तीन्यवशिष्ठानिपंचपंचकोष्ठानिमार्जयेत् ॥ ॥ तथाचमध्यचतुरस्र
पीठपादाःसिध्यंति ॥ ॥ ततोमध्याच्चत्वारिष्टत्तानिकुर्यात् ॥ ॥ तत्राद्येचत्वार्यंगुलानिव्यासः ॥ ।. द्वितीयेष्टौ ॥ तृतीयेचतुर्विंशतिः ॥ चतु

र्थे षड्विंशतिरिति ॥ ॥ तत्र चतुरंगुलं वृत्तं कर्णिकारूपम्पीतेन रजसा पूरयित्वा कर्णिकावधि रेखां सितेन रजसा निर्माय तद्बहिरष्टांगुलात्मके वृत्ते पीत
रक्तासितरजोभिः संपादितमूलमध्याग्राणि षोडश केसराणि संपाद्य तत्केसरावधि रेखां सितेनैव रजसांगुलोन्नतां सम्पाद्य चतुर्विंशांगुलात्मके तद्बहिर्बहि
र्वृत्ते सितेन रजसाष्टदिक्ष्वष्टौ पत्राणि रक्ताग्राणि कुर्यात् ॥ ततो दलांतररेखां सितेन रजसा विधाय दलांतराणि कृष्णेन रजसा पूरयित्वा तद्बहिरेकां
गुलांतरा बहिर्वृत्तरेखां सितेनैव रजसा संपाद्य वृत्तद्वयांतरं परितो ष्टदलाग्रतन्मध्यचिन्हैः षोडशधा विभज्य प्रतिभागं यवाकारान् षोडशारान् श्याम
पीतारुणश्वेतरजोभिः कल्पयित्वा तदंतरेण यथायोगं रजोभिः पूरयित्वा तद्बहिः सितपीतारुणश्यामहरिताः पंचरेखा लिखेत् ॥ तद्बहिः पीठे च चतुर
स्रं यथाशोभं रजोभिः रक्तां कृत्य पीठावधि रेखां सितेन रजसा चतुरस्रां रचयेत् ॥ द्वाराणि चाग्निपूर्वादितः पीतश्यामसितहरितरजोभिः पूरयेत् आग्नेया
दिकोणकोष्टचतुष्टयं लोहितहरितश्यामधवलैः पूरयेत् ॥ आग्नेयादिपीठपादचतुष्टयं पंचकोष्ठात्मकं तत् क्रमात् सितरक्तपीतकृष्णरजोभिः पूरयेत् ॥
ततः सितेन रजसांगुलोन्नतेन बहिश्चतुरस्ररेखां कुर्यादिति मदनरत्नादयः । ठक्कुरमते तु चतुरस्रं वर्तुलं त्वत्र प्रत्येकं द्वादशांगुलानि नवकोष्ठानि ।
वृत्तानि तु पंच ॥ तत्राद्यवृत्ते चत्वार्यंगुलानि व्यासः ॥ द्वितीये ष्टौ ॥ तृतीये विंशतिः ॥ चतुर्थे चतुर्विंशतिः ॥ पंचमे तच्चतुरस्रं बहिस्ततो ष्टत्रिंशदिति ।
पंचकोष्टात्मकं पीठपादचतुष्टयं ॥ आग्नेयादिक्रमेण रक्तहरितश्यामसितैः पूरणीयं कोणकोष्टचतुष्टयं प्रतेयकं त्रिभिस्त्रिभिर्वर्णैरिति विशेषः
इदमेव वारुणां मंडलं जलाशयोत्सर्गादौ ज्ञेयं । पुनस्तत्रैव ॥ वज्रं प्रागुत्तमे भागे आग्नेयां शक्तिमुज्वलां ॥ आलिखेद्दक्षिणे दंडं नैरृत्यां खड्गमालिखेत्

पाशंतुवारुणोल्लेख्यंध्वजंवैवायुगोचरे ॥ कौवेर्यांतुगदांलिख्यईशान्यांशूलमालिखेत् शूलस्यवामदेशेतुचक्रंपद्मंचदक्षिणे ॥ ततोमहावेद्यांपरितःपंच
वर्णफलपुष्पोपशोभितंवितानंकुंडमंडपेवध्नीयादिति ॥ इतिवेद्यांपरितःषोडशारचक्रं ॥ अथघृतादितुलाफलमुक्तं हेमाद्रौविष्णुधर्मोत्तरे ॥ प्रथ-
मातुघृतस्योक्तातेजोवृद्धिकरीशुभा । माक्षिकेणतुसौभाग्यंतैलेनवहुलाःप्रजाः ॥ वस्त्रेणदिव्यवस्त्राणिप्राप्नोतितुलयाध्रुवं ॥ लवणेनतुलावण्यम-
रोगित्वंगुडेनच । असपत्नःशर्करयासुरूपंचंदनेनतु ॥ अवियोगोभवेद्भर्त्रातुलयाकुंकुमस्यच ॥ नसंतापोहृदिभवेत्क्षीरस्यतुलयाताथा ॥ सर्वकाम
प्रदाःसर्वाःसर्वपापक्षयंकराः ॥ यःकरोतितुलाःसर्वाःसगौर्यालयमाप्नुयात् ॥ मंत्रेणदद्यादभिमंत्रितांतुमक्षुत्तुलामेकतमांद्विजेभ्यः ॥ सयाति
गौर्याःसदनंसुपुण्यंनशोकदौर्भाग्यमुपाश्नुतेपुमान् ॥ त्वंतुलेसर्वभूतानांप्रमाणमिहकीर्तिता ॥ मांतोलयतीसंसाराद्दुःखनसोस्तुते ॥ ॥
इत्यारुह्य ॥ ॥ गोदोहकालंतत्रासीच्चिंतयित्वाहरिप्रियां ॥ अवरुह्यततोदद्यादर्घ्यंपादमथापिवा ॥ गुरुंसंपूजयेद्विधिवद्वस्त्रालंकारभूषणैः ।
विसर्जयेन्नमस्कृत्यभोजयेद्विजपुंगवान् ॥ शेषंद्विजेभ्योदातव्यंस्त्रीभ्योनेत्र्यस्तथैवच ॥ कदलीदलसंस्थाचपंचपिंडाहिमाद्रिजा ॥ कर्पूरस्य
तुतांपूजयेत्कुंकुमेनालभेत्तुतां ॥ विधिनानेनयोदद्यात्तुलादानंविमत्सरः ॥ सलोकमेतिपार्वत्याःसेव्यमानोप्सरोगणैः ॥ तत्रापिकालंसुचिर
मिहलोकेनृपोभवेत् ॥ आत्मतुल्यंसुवर्णंवारजतंरत्नमेववा ॥ योददातिद्विजाग्र्येभ्यस्तस्याप्येतत्फलंलभेत् ॥ ॥ एतद्भूमिदानजनत्रम् ॥
ब्रह्महत्यादिपापाद्यैर्मुक्तःशिवपुरंव्रजेत् ॥ सचतत्पापनिर्मुक्तःप्रोक्तंविष्णुपुरंव्रजेत् ॥ तुलापुरुषभूमींचदीयमानेतुयेनराः ॥ पश्यंतितेपित्रा

यांतीयेवास्युरनुम।दकाः ॥ गुडंवायदिवाखंडंलवणांवापितोलितं ॥ योदद्यादात्मनातुल्यंनारीवापुरुषोपिवा ॥ पुमान्प्रद्युम्नवत्स्यात्तुनारी स्यात्पार्वतीसमा ॥ सुभगौरूपसंपन्नौभुंजीतांतेत्रिविष्टपं ॥ हिरण्यदक्षिणायुक्तंसवस्त्रंभूषणान्वितम् ॥ अलंकृत्वाद्विजाग्र्यंतंपरिधाय्यचवास सीखण्डादितोलितंपश्चाद्गुरवेप्रतिपादयेत् ॥ सर्वकामसमृद्धात्मानंतंकालंवसेद्दिवीति ॥ । इतिघृतादितुलादानफलम् ॥ ॥ अथनानारोग निरामार्थंद्रव्यविशेषतुलादानान्युक्तानिगारुडे ॥ ॥ तुलापुरुषदानंतुश्रुणुमृत्युंजयोद्भव ॥ अथलोहंप्रदातव्यंसर्वरोगोपशांतये ॥ कांस्यंच- यक्ष्मणेदेयंत्रपुचार्शोविकारके ॥ अपस्मारेतुसीसंस्यात्ताम्रंकुष्ठेचदारुणे ॥ पित्तज्वरेरक्तपित्तेचरूप्यंप्रदरमेहयोः ॥ सुवर्णंसर्वरोगेषुप्रदद्यान्मृ त्युनाशनम् ।। फलोद्भवंतथादेयंग्राहिण्यादीर्घवाहणे ॥ गौडंभस्मकरोगेचपौगंस्याद्गंडमालके ॥ ॥ पौगंपूगीफलम् ॥ काष्ठजंचाग्निमां देस्याद्रोगोत्पत्तौतुपैष्टकं ॥ मधूद्भवंतथादेयंकासश्वासजलोदरे ॥ घृतोद्भवंतथादेयंछर्दिरोगोपशांतये ॥ क्षीरम्पित्तविनाशायदधिस्याद्भग- दारणे ॥ लवणंलेपनाशायपैष्टंदद्रुविनाशने ॥ धान्यञ्चसर्वरोगस्यनाशनेमुनिभिःस्मृतमिति ॥ अत्रायंसंक्षेपोदानोद्योतेपि ॥ रूप्यतुलायांसुवर्ण तुलाफलमेव ॥ पित्तव्याधिःप्रदरमेहनाशश्च ॥ रत्नतुलायांस्वर्णफलमेव ॥ ताम्रेणकुष्टनाशः ॥ लोहेनसर्वरोगविनाशः ॥ घृतेनतेजोवृद्धिः छर्दिनाशश्च । गुडेनारोगित्वंसौभाग्यवृद्धिश्च ॥ लवणेलावण्यंसौभाग्यंच ॥ मधुनासौभाग्यंकासश्वासजलोदरनाशश्च ॥ तैलेनप्रजावान्- भवति ॥ क्षीरेणपित्तनाशःसंतापनिवृत्तिश्च ॥ दध्नाभगंदरनाशः ॥ शर्करयासपत्नबाधानिवृत्तिः । अन्नेनारोगित्वं ॥ पिष्टेनदद्रुनाशः ॥ फलै

संग्रहणीनाशः ॥ क्रमुकैर्गण्डमालानाशः । क्रमुकं पूगीफलम् ॥ मखदृग्गंधिनाशनं दद्रुनाशश्च ॥ चंदनेनसौंदर्यवान् ॥ गंधेनसौभाग्यम् ॥ वस्त्रेणादित्यवस्त्रावाप्तिः ॥ काष्ठैरग्निमांद्यनाशः ॥ विष्णुप्रीतिर्नासर्वद्रव्यैरपीति ॥ इतिनानारोगनिरासद्रव्यविशेषतुलाः ॥ ॥ अथपञ्चार्थं तत्तद्रव्याधिदेवतामाह ॥ ॥ गारुडे ॥ ॥ अधिदैवंतुलोहेवैमहाभैरवउच्यते ॥ कांस्येत्रपावश्विनौचवायुश्चसीसकेस्मृतः ॥ ताम्रेरुद्र्यस्तथाप्रोक्तःपैत्तलेचकुद्रस्तथा ॥ रौप्येचपितरोज्ञेयाःसौवर्णेसवदेवताः ॥ फलेसोमेगुडेचापस्तांबलेचविनायकः ॥ गंधर्वाःकुसुमेचैवजांगलेग्निस्तथास्मृतः ॥ जांगलेकाष्ठे ॥ मधौयत्नंप्रयत्नेनघृतेमृत्युंजयंतथा ॥ क्षीरेतारागणाःसर्वेदध्निसर्पाःप्रकीर्तिताः ॥ लवणेपार्वतीदेवीरामुद्गीष्टाधिदेवता ॥ पिष्टेप्रजापतिर्देवोग्रन्नेसर्वाश्चदेवताः ॥ आर्तिर्यदाख्यत्पालाणांप्राभुयात्पुण्यदेमतः ॥ नित्यंमतुंत्रजयप्राप्तिर्विधिनायत्प्रदीयते ॥ तदेवसर्वशांत्यर्थंभवतीतिनसंशयः ॥ तुलापुरुषदानेनमृतुंत्रजयतिमानवः ॥ आगमोक्तमतुंत्रजयमंत्रेणापजयित्वेत्यर्थः ॥ नाममन्त्रेणवायथाधिकारंयोजनम् ॥ ॥ इतिद्रव्याधिदेवता. ।। ॥ अथकालविशेषः ॥ ॥ दानोद्योतेविश्वामित्रः ॥ आदित्येराहुणाग्रस्तेसुवर्णैस्तोलयेत्तनुं ॥ सोमग्रहेतुरौप्येणयद्वादानंतथाष्टरणु । प्रवर्ग्यस्यमुखेजातउत्पन्नःपितृदेहतः ॥ सर्वपापहरायैतद्दामिप्रीयतांविधुः । इत्युच्चार्यजलंत्वप्सुनिक्षिपेद्विजसत्तमेति ॥ अथतुलापुरुषदानविधिः ॥ ॥ हेमाद्रौविष्णुधर्मोत्तरे ॥ ॥ तुलादानंप्रवक्ष्यामिसर्वपापप्रणाशनम् । यद्गौर्याचरितंपर्वंलक्ष्मीनारायणेनतु ॥ पुण्यंदिनमथासाद्यतृतीयायांविशेषतः ॥ गोमयेनानुलिप्तायांभूमौहस्तावटंशुभम् ॥ दारवंशुभटत्वस्यचतुर्हस्तप्रमाणतः

सुवर्णांतत्रबध्नीयात्स्वशक्त्याघटितं दृढे ॥ सौवर्णंस्थापयेत्तत्रवासुदेवंचतुर्भुजम् ॥ शिक्यद्वयंचबध्नीयात्स्थापयेत्पीठकेततः ॥ तत्रारोहेत्सवस्त्रा
स्त्रः सर्वालंकारभूषितः ॥ अभीष्टदेवतांगृह्य स्नापयित्वाघृतादिभिः ॥ तुलापुरुषदानस्यविधिरेवःप्रकीर्तितः ॥ अत्रविधिरेषप्रकीर्तितइतिएताव-
तेत्रवकर्तव्यतेतुरत्नाम् ॥ भवतीतिदामोदरः ॥ नानत्रदितितुलादानमधिकृत्यलिंगपुराणे ॥ दक्षिणाचशतंसार्द्धंतदर्धंवापिदापयेत् ।
गुरोरितिशेषः ॥ ॥ ऋत्विजांचैवसर्वेषांदशनिष्कान्प्रदापयेदिति ॥ तथा ॥ यजमानः अयनग्रहणसंक्रमादिपुण्यकालमासाद्यपू
र्वेद्युरेकभक्ताचरितप्रायश्चित्तःकृतनित्यक्रियोदर्भेष्वासीनोदर्भान्धारयमाणःशुचिराचम्यदेशकालौसंकीर्त्यममामुककामनासिद्धिद्वाराश्रीपर
मेश्वरप्रीत्यर्थंअमुकद्रव्यतुलापुरुषदानंकरिष्ये इतिसंकल्पतथारोगनिरासार्थेतुममामुकरोगनिरासेनममास्यशिशोर्वामुकरोगनिराशेनक्षिप्रारो
ग्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमिति ॥ तथा ॥ यदातुशिष्टाचारवशात्ताम्रादितुलासुअष्टमांशंचतुर्थांशंवासुवर्णरजतादिप्रक्षिप्यतेचेत्तदा
सवर्णादितुलयाचतुर्थांशाष्टमांशादितुलाविशेषफलप्राप्तिद्वाराइतुत्रल्लेखःकार्यः ॥ ॥ तदंगतयागणपतिपूजनंपुण्याहवाचनमाचार्यवरणमं
गदेवतापूजनमहंकरिष्ये ॥ इतिसंकल्प्य ॥ गणपतिंसंपूज्यपुण्याहंस्वस्तिऋद्धिःश्रीःकल्याणमितिशब्दपंचात्मकंबौधायनोक्तम् ॥ ब्राह्मणां
स्त्रिस्त्रिर्वाचयित्वाचार्यंवृत्वाचार्यस्तुलायांगौरीविष्ण्वादितुलांगदेवताश्चपूजयित्वारोगनिरासार्थेतुमहामृत्युंजयमंत्रेणप्रतिमायांमृत्युंजयंताम्रा-
दितोलनीयद्रव्यादिदेवतांश्चपूजयेदिति ॥ इतितुलापुरुषदानविधिविशेषः ॥ ॥ अथतुलादानप्रयोगः ॥ ॥ यजमानोशुचिराचम्यप्राणानायम्य-

देशकालौसंकीर्त्यएकैकमन्वंतरकालावच्छिन्नप्रतिलोकपालस्थाननिवासपूर्वकार्कवर्णकिंकिणीजालमालिविमानकरणकाप्सरःपूजासहितशिव-
पुरगमनपूर्वककल्पकोटिशतावच्छिन्नविष्णुपराधिकरणकनिवासकामःसुवर्णरत्नरौप्यतुलापुरुषमहादानमहंकरिष्ये। यद्वा॥ ब्रह्महत्यादिसकल
पापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसुवर्णरत्नरौप्यतुलापुरुषमहादानंकरिष्ये॥॥ तत्रादौगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्य
वरणादिकुर्यात्॥ ताम्रादितुलायांतसंकल्पोक्तरंगणपतिपूजनपूर्वोक्तपुण्याहवाचनमाचार्यंकृत्वाचार्यंहुत्वायथाविभवंवस्त्रालंकारादिभिःपूजयेत्॥
ततश्चाचार्यंगोमयोपलिप्तवेद्यादौसर्षपविकिरणपंचगव्यप्रोक्षणंकृत्वावेद्यांवारुणमंडलंविलिख्यउपरिकुंडमंडपेपंचवर्णंवितानंफलपुष्पोपशो-
भितंसध्वजंवध्वावेद्यादौघटमात्रयतनदक्षिणोदकशिक्यांतुलांवध्नीयात्॥ गौरीप्रीत्यर्थंतुलायांकर्पूरकृतपंचपिंडिकारूपागौरींकुंकुमेनानुपूज-
येत्॥ ततोधर्मराजसूर्यविष्णुप्रतिमाःतिस्रोमाषमात्रसुवर्णनिर्मिताग्न्युत्तारणादिपूर्वकंसंपूज्यइष्टदेवतांचपंचामृतेनाभिषिच्याभ्यर्च्यविष्णुप्रति
मांतुलामध्येवध्वाततःपूर्वोक्ततोलनीयद्रव्यादिदेवतांसंपूज्यतुलायैनमइतितुलांचतुलाप्रांतकूटयोर्विष्णुमनंतंमध्यकूटेवासुकिंफलकद्वयेभूमिंचसं
पूज्यरक्तवस्त्रेणतुलांसंवेष्ट्यततःशक्तौसक्तप्रांतुलादंडेसुवर्णनिर्मितासुचतुर्विंशतिप्रतिमासुउदक्संस्थांदेवतामावाहयेत्॥ ॥ पूजयेच्च ॥ ॥
तदित्थम्॥ ॐईशानायनमः॥ ईशानंआवाहयामि॥ १॥ एवंसर्वच॥ ॐशिशिनेनमः॥ शशिनंआवाहयामि॥ २॥ ॐमारुताय॰
ॐरुद्राय॰॥ ४॥ ॐसूर्यायन॰॥ ५॥ ॐविश्वकर्मणे॰॥ ६॥ ॐगुरवेनमः॥ ७॥ ॐअंगिरोग्निभ्यांन॰॥ ८॥ ॐप्रजा

पतये० ॥ ९ ॥ ओंविश्वेभ्योदेवेभ्यो० ॥ १० ॥ ओंधात्रेनमः ॥ ११ ॥ ओंपर्जन्यशंभुभ्यां० ॥ १२ ॥ ओंपितृभ्यो० ॥ १३ ॥ ओं-
सौम्याय० ॥ १४ ॥ओंधर्माय० ॥ १५ ॥ ओंअमरराजाय० ॥ १६ ॥ ओंअश्विभ्यां० ॥ १७ ॥ ओंजलेशाय० ॥ १८ ॥ ओं
मित्रावरुणाभ्यां० ॥ १९ ॥ ओंमरुद्गणेभ्यो० ॥ २० ॥ ओंधनेशाय० ॥ २१ ॥ ओंगंधर्वाय० ॥ २२ ॥ ओंजलेशाय० ॥ २३ ॥
ओंविष्णवे० ॥ २४ ॥ इत्यावाह्यसंपूज्य ॥ ततोयजमानोवस्त्राभरणगंधमाल्याद्यलंकृतःकुसुमांजलिंगृहीत्वातुलांत्रिःप्रदक्षिणीकृत्यप्राङ्मु
खउपविश्यप्रार्थयेत् ॥ओंनमस्तेसर्वदेवानांशक्तिस्त्वंसत्यमाश्रिता ॥ साक्षिभूताजगद्धात्रीनिर्मिताविश्वयोनिना ॥ एकतःसर्वसत्यानितथानृतश-
तानिच ॥ धर्माधर्मकृतांमध्येस्थापितासिजगद्धिते ॥ त्वंतुलेसर्वभूतानांप्रमाणमिहकीर्तिता ॥ मांतोलयंतीसंसाराद्धुद्धरस्वनमोस्तुते ॥ ॥ यो
सौतत्त्वाधिपोदेवःपुरुषःपंचविंशकः । सएषोधिष्ठितोदेवित्वयितस्मान्नमोनमः । नमोनमस्तेगोविंदतुलापुरुषसंज्ञक ॥ त्वंहरेतारयस्वास्मानस्मात्सं
सारसागरादिति ॥ इतिपठित्वातुलोपरिपुष्पांजलिंक्षिपेत् ॥ पुनस्तुलांत्रिःप्रदक्षिणीकृत्यवामहस्तेधर्मराजंदक्षिणेहृदयेस्वकेस्वाभीष्टदेवतां-
पंचामृताभिषिक्तार्चितांचादायप्राङ्मुखस्तुलायामुत्तरफलकमारुहेत् ॥ दक्षिणेनसुवर्णंस्यादुत्तरेणनराधिपइतिमात्स्यवचनात् ॥ ॥ नरा-
धिपइत्युपलक्षणम् ॥ ॥ ततःआचार्योदक्षिणफलकेतोलनीयद्रव्यमारोपयेत् ॥ सुवर्णंयावत्समधिकंस्यात् ॥ पुष्टिकामेनभूयिष्ठमधिकंकार्य
म् ॥ ततोयजमानस्तुतावदंडस्थितदृष्टिर्हरेर्मुखंपश्यन्मंत्रौपठेत् ॥ ओंनमस्तेसर्वभूतानांसाक्षिभूतेसनातनी ॥ पितामहेनदेवित्वंनिर्मितापर

रमेष्ठिना ॥ त्वयाधृतं जगत्सर्वं सहस्थावरजंगमम् ॥ सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ॥ इति गोदोहकालं तत्र स्थित्वा ततस्तुलामवतीर्य तो-
लितद्रव्ये तुलसीपत्रं निधाय देशकालौ संकीर्त्यामुककामः इदममुकद्रव्यमात्मसमतोलितमाचार्याय नेभ्यो ब्राह्मणेभ्यः समस्तायितवं धुवर्गेभ्यो दीना-
नाथेभ्यश्च दातुमहमुत्सृजे न ममेत्युत्सृजेत् ततः कृतस्यामुकतुलापुरुषदानकर्मणः सांगतासिद्ध्यर्थमाचार्याय इदं सुवर्णमग्निदैवतं दक्षिणात्वेन तुभ्य-
महं संप्रददे ॥ न ममेति दद्यात् ॥ पुनः कृतस्यामुकतुलापुरुषदानकर्मणः इत्यादि सांगतासिद्ध्यर्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसी
दक्षिणां दातुमहमुत्सृजे ॥ तथा कृतस्यामुकतुलापुरुषदानकर्मणः सांगतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् यथाकालं यथोत्पन्नेनान्नेन भोजयिष्ये इति
संकल्प्य ॥ ततः आचार्यस्त्वावाहितदेवताः सर्वाः अर्चनपूर्वकं विसृज्याचार्याय तुलार्धपादं वा प्रतिमावस्त्रादिभरणादि सर्वं तुभ्यमहं संप्रददे ॥ न मम-
इति दत्त्वा सदस्यायादावेतदर्धं दत्त्वा तुलाशेषं चरुत्विग्भ्य एव यथोद्देशं दत्त्वा ॥ ॥ प्रमादात्कुर्वतां॰ ॥ यस्य स्मृत्येति जपित्वा कर्मेश्वरार्पणं कृत्वा सुहृद्यु-
तो भुंजीतेति ॥ ॥ केचित्तु ॥ अत्र तुलापूजोत्तरमग्निं संस्थाप्य ईशानादितुलास्थदेवताभ्योऽष्टाष्टाज्याहुतयस्त्वेच्छंतीति ॥ तुला प्रतिग्रहप्रा-
यश्चित्तं त्वाचार्यश्चांद्रायणमेकं कुर्यात् । प्रतिग्रहानुसारेणोत्युक्तं दानेष्वोतरहस्येषु ॥ ॥ हेमाद्रौ मात्स्ये ॥ ॥ न चिरं धारयेद्गेहे सुवर्णं तो-
लितं बुधः :: तिष्ठद्भयावहं यस्मात्छोकव्याधिकरं नृणाम् ॥ शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलमिति सुवर्णादि सर्वद्रव्यतुलास्वेवं कैमुतिकन्या-
यात् । अत्रत्यः सुवर्णशब्दो रजतादिसर्वद्रव्यतुलोपलक्षकोवोध्यः । मीमांसैकधुरंधरः श्रुतिधरान्न्यायं दिवागीश्वरः साहित्ये मतिसागरः सुजनताव

ल्लीरसालद्रुमः ॥ यद्दिद्वन्मणिशेखरो दिनकरः प्रास्तूत विश्वेश्वरं ॥ तेनाकारि घृतादितोलनविधौ सत्प्रीतये पद्धतिः ॥ ॥ इतिश्रीदानोद्योतदा-
नरत्नमयूखायनसारेणाचकालोपनामकभट्टदिवाकरकृतदानसंक्षेपचन्द्रिकायांताम्रघृतादितुलापुरुषदानप्रयोगः ॥ अथगोसहस्रमहादान-
प्रयोगः ॥ हेमाद्रौ मात्स्ये ॥ ॥ गोसहस्रदानंचिकीर्षुरधिवासनदिनात्प्राक् त्रिरात्रंएकरात्रंवाशक्तितःपयोव्रतोधिवासनदिनेशुचिर्यजमानोदे
शकालौसंकीर्त्यममसमस्तपापक्षयोत्तरसिद्धचारणासेवितार्कवर्णकिंकिणीजालमालिविमानारोहणोत्तरानेकमन्वंतरावच्छिन्नेंद्रादिसकललोक-
पाललोकाधिकरणकपुत्रपौत्रसमन्वितशिवालयगमनैकोत्तरसंख्यासंख्येयपितृमातामहकुलतारणाकल्पशतावच्छिन्नशिवपुरनिवासानंतरराजरा
जीभवनाश्वमेधशतकर्तृत्वशिवध्यानपरत्वविष्णुसादृश्यापन्नयोगस्यानेकसंसारमोचनकामःश्वोगोसहस्रमहादानंप्रतिपादयिष्ये ॥ इतिसंकल्पयेत्
ततोपवासगुर्वादिनियोगांतंतुलापुरुषमहादानवत्कुर्यात् ॥ अथाचार्यएकंलक्षण्यंनंदिकेश्वरंवृषंसवत्सदशोत्तरगोसहस्रात्सवत्सांधेनुंदशकांचस्व-
र्णघंटास्वर्णपट्टकौशेयवस्त्रमाल्यहेमरत्नयुतंशृंगरौप्यखुरचामरोपशोभितंसताम्रदोहनंपादुकोपानच्छत्रायनेकोपस्करयुतंवेदीपरितःस्थापये-
त् ॥ मण्डपाद्बहिस्तुयथावकाशंगोसहस्रंवस्त्रमाल्यस्वर्णशृंगरौप्यखुराद्यैरलंकृत्याधिवासयेत् । अथासादितसगोवृषदशकमध्येत्रचक्रोपरिस्थापितं
लवणद्रोणोपरिपूर्वोक्तलक्षणंकौशेयसंवीतंनानाभरणभूषितंमाल्येक्षुफलसंयुक्तंनंदिकेश्वरंस्थापयेत् । वेद्युपरिफलपुष्पादिशोभितंपंचवर्णवि
तानंकूटेबध्नीयात् ॥ ततःआचार्यादयःस्वस्वकुण्डसन्निधौसर्वौषध्यादियुतकलशचतुष्टयस्थापनादियजमानाभिषेकांतंतुलामहादानवत्कुर्युः ॥

ततः शुक्लमाल्यांबरधरः सकुसुमांजलिना सवृषगोदशकं तमामंत्रयेत् ॥ ॥ तत्र मन्त्रः ॥ ॥ नमो वो विश्वमूर्तिभ्यो विश्वमातृभ्य एव च ॥ लो-
काधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ॥ गवामंगेषु तिष्ठंति भुवनानेकविंशतिः ॥ ब्रह्मादयस्तथा देवा रोहिण्यः पांतु मातरः ॥ गावो मे अग्रतः
संतु गावो मे संतु पृष्ठतः ॥ गावो मे हृदये संतु गवां मध्ये वसाम्यहं यस्मात्त्वं वृषरूपेण धर्म एव सनातनः । अष्टमूर्त्तेरधिष्ठानमतः पाहि सदा नमेति ॥
पुष्पांजलिना संपूज्य वेदीपश्चिमे प्राङ्मुख उपविश्य पूर्ववद्देशकालौ स्मृत्वा मम समस्तपापक्षयादिसंसारमोचनकाम इत्यन्ते इदं वृष इमाः सवत्सधेनुद-
शकसहिताः सहस्रं गाः सांगोपांगाः अमुकामुकगोत्रामुकामुकवेदाध्यापकामुकामुकशर्मभ्यो ऋत्विकादिभ्यश्च संप्रददे न ममेति गुर्वादिहस्तेषु जलं-
दद्यात् । ते च देवस्य त्वेति यजुःशाखाध्यायगामि त्यक्त्वा पुच्छेषु प्रतिगृह्य स्वस्तीत्युक्त्वा यथाशाखं कामस्तुतिं क इदं कस्मा अदादिति पठेयुः । ततो यजमानः
कृतस्य गोसहस्रमहादानकर्मणः सांगतासिद्ध्यर्थं ग्रामं भूमिं वा दत्त्वा सुवर्णं दक्षिणात्वेन तुभ्यमहं संप्रददे ॥ न ममेति प्रत्येकं तेभ्यो दक्षिणां दद्यात् ॥
ततः कृतस्य गोसहस्रमहादान इत्यादि० ॥ सांगतासिद्ध्यर्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृजे न ममेति ॥
तथा पुनः कृतस्य इत्यादि० ॥ सांगतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् यथाकालं यथोपपन्नेनान्नेन भोजयिष्ये इति संकल्पयेत् ॥ ॥ ततः आचार्यः पुण्या-
हवाचनाद्यावाहितदेवताः संपूज्य उत्तिष्ठ ब्रह्मणस्पत इति देवान्विसृज्य तद्दिने पयोव्रतमशक्तौ यजमानो नक्ताशी ब्रह्मचारी भवेत् ॥ ततः प्रमादात्-
कुर्वतां कर्म इति श्रुतिः यस्य स्मृत्येति वचनात् कर्मेश्वरार्पणं कुर्यादिति ॥ इति दानसंक्षेपचंद्रिकायां गोसहस्रमहादानप्रयोगः ॥ भविष्यपुराणे ॥

शतंगावःसवृषभाधेनूपस्करसंयुताः ॥ दत्वातुब्राह्मणेभ्यस्तुविशुद्धेनांतरात्मना ॥ शिवादिसर्वलोकेषुयथेष्टंमोदतेतुसः ॥ पुण्यकालेशुचिरा-
चम्यप्राणानायम्यदेशकालौसंकीर्त्यममसमस्तपापक्षयपूर्वकमिंदुचारणसेवितार्कवर्णकिंकिणीजालमालाविमानारोहणोत्तरानेकमन्वंतरावच्छिन्नं
इंद्रादिसकललोकपालाधिकरणकपुत्रपौत्रसमन्वितशिवपुरादिसर्वलोकनिवासानंतरसंततिविष्णुसायुज्यावाप्तिकामोवृषाधिकसालंकृतगोशतदानं-
करिष्यइतिसंकल्प्यगणपतिपूजनंसंक्षिप्तपुण्याहवाचनमात्रंकृत्वागोभ्योनमइतिवृषभागाःसंपूज्यब्राह्मणेनमइतिब्राह्मणांश्चयथाशक्तिवस्त्रालं
कारादिभिःसंपूज्यप्रार्थयेत् ॥ ॥ तत्रमंत्राः ॥ ॥ गावःसुरभयोनित्यंगावोगुग्गुलगंधिकाः ॥ गावःप्रतिष्ठाभूतानांगावःस्वस्त्ययनंमहत् ॥
अन्नमेवपरंगावोदेवानांहविरुत्तमं ॥ पावनंसर्वभूतानांरक्षंतिचवहंतिच ॥ हविषामंत्रपूतेनतर्पयंत्यमरानपि ॥ महर्षीणांचहोतॄणांगावोहो-
मेप्रतिष्ठिताः ॥ सर्वेषामेवभूतानांगावःशरणमुत्तमम् ॥ गावःपवित्रंपरमंगावोमंगलमुत्तमम् ॥ गावःसर्वस्यलोकस्यगावोधन्याःसवाहनाः ॥
नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ घृतक्षीरप्रदागावोघृतयोन्योघृतोद्भवाः ॥ घृतनद्योघृ-
तावर्त्तास्तामेसंतुसदागृहे ॥ इतिगावःसंप्रार्थ्यवृषभंप्रार्थयेत् ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्त्तेरधिष्ठानमतःपाहिसनातने-
तिवृषभंप्रार्थयेत् ॥ ततःसलिलतिलकुशानादायअद्येत्यादिममसमस्तपापक्षयेत्यादिविष्णुसायुज्यावाप्तिकामोवृषाधिकशतंगाःधेनूपस्कराःसहि
रण्यदक्षिणायुताःरुद्रदेवतास्तन्मूल्योपकल्पितनिष्क्रयरजतमुद्रावानानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजेनममेतितेनभगवान्परमात्मा

श्रीपरमेश्वरःप्रीयताम् ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ कृतस्यसवृषगोशतदानकर्मणःसांगतासिद्धयर्थंब्राह्मणभोजनंभूयसींदक्षिणांचदद्यात् ॥ अ
थवाअद्येत्यादि॰ सवृषरुद्रदैवतसहिरण्यदक्षिणायथाशक्त्यलंकृतगोशतमूल्योपकल्पितनिष्क्रयरजतमुद्राःनानानामगोत्रेभ्योब्राह्मणेभ्योदातुम
हमुत्सृजेनममेति ॥ ततोब्राह्मणभोजनसंकल्पंभूयसींचदद्यात् ॥ इतिसवृषगोशतदानप्रयोगः ॥ ॥ अथसवृषगोदानप्रयोगः ॥ ।
॥ भविष्ये ॥ दशगावःसवृषभावृषभैकादशाःस्मृताः ॥ दत्वातुब्राह्मणेभ्यश्चसयातिपरमांगतिम् ॥ शिवादिसर्वलोकेषुयथेष्टंरमतेनरइति
पुण्यकालेशुचिराचम्यदेशकालौसंकीर्त्यममसमस्तपापक्षयपूर्वकशिवादिसर्वलोकनिवासांतेविष्णुसान्निध्यकामोवृषाधिकदशगोदानंकरिष्यइति
संकल्प्य ॥ गणपतिपूजनंपुण्याहवाचनमाचंकृत्वागोभ्योनमइति सवृषगाःसंपूज्यब्राह्मणेभ्योनमइतिब्राह्मणांश्चयथाशक्तिवस्त्रालंकारादि-
भिःसंपूज्यगाःप्रार्थयेदेभिर्मंत्रैः ॥ गावोमामुपतिष्ठंतुहेमशृंग्यःपयोमुचः ॥ सुरभ्यःसौरभेयाश्चसरितःसागरास्तथा ॥ गावःपश्याम्यहंनित्यंगा
वःपश्यंतुमांसदा ॥ गावोस्माकंवयंतासांयतोगावस्ततोवयं ॥ गावोममाग्रतोनित्यंगावःपृष्ठतएवच ॥ गावोमेसर्वतश्चैवगवांमध्येवसाम्यहम् ।
इतिगाःसंप्रार्थ्यवृषभंप्रार्थयेत् ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातनेति ॥ वृषभंचप्रार्थयेत् ॥ ततः
सकुशतिलजलमादायअद्येत्यादिममसमस्तपापक्षयपूर्वकशिवविष्णुसान्निध्यावाप्तिकामोवृषाधिकदशगाधेनूपस्कराःसहिरण्यदक्षिणायुतारुद्र-
दैवतास्तन्मूल्योपकल्पितरजतमुद्रावानानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजेन ॥ नममेतिसंकल्पंकुर्यात् ॥ ॥ ततोब्राह्मणभोजन-

संकल्पःभूयसींचदद्यात्। अथवाष्टषाधिकधेनूपस्करसहिरण्यदक्षिणायुतदशगारुद्रदैवतास्तन्मूल्योपकल्पितरजतमुद्राःनानानामगोत्रेभ्योब्राह्म-
णेभ्योदातुमहमुत्सृजे ॥ नममेतुरुद्राद्दद्यात् ॥ ब्राह्मणभोजनसंकल्पंकृत्वाभूयसींचदद्यादितिसंक्षेपः ॥ ॥ इतिसप्तषदशगोदानप्र-
योगः ॥ ॥ अथदशमहादानानि ॥ कौर्मे ॥ कनकाश्वतिलानागादासीरथमहीगृहाः ॥ कन्याचकपिलाधेनुर्महादानानिवैदश ॥ तत्रप्र-
थमंतावत्सुवर्णदानम् । मूले ॥ दत्वासुवर्णस्यशतंविप्रेभ्यःश्रद्धयान्वितः ॥ ब्रह्मलोकमनुप्राप्यब्रह्मणासहमोदते ॥ गव्येनभूमिंशकृताजलेन-
आलिप्यमध्येसिततंदुलैश्च ॥ सरोरुहंकेसरभूषणाढ्यंसकर्णिकंचाष्टदलंविलिख्य ॥ मध्येतस्मिन्हिरण्यंशतमानमात्रंनिधायतस्योपरितंविचि-
न्त्येति ॥ तत्रब्रह्माणंकमलासनस्थंसंपूज्य ॥ विप्रंदृष्ट्वायथाविभववस्त्रालंकारादिभिःसंपूज्यदद्यात् ॥ ॥ हेमाद्रौदानकांडे ॥ ॥ देयं-
तद्योजयेत्पूर्वंततोविप्रंचपूजयेत् ॥ तत्तन्मंत्रैःप्रदद्याद्वैसर्वदानेष्वयंविधिरिति ॥ ॥ अद्येत्यादिममसमस्तपापक्षयपूर्वकमेरुदानसमफला-
वाप्तयेदेयद्रव्यतृतीयांशदक्षिणासहितंइदंसुवर्णंअग्निदैवतंअमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेनममेतिदद्यात् ॥ हिरण्यगर्भ-
गर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ इतिकनकदानम् ॥ ॥ अथाश्वदानेमहाभारते ॥ ॥ सर्वोपकरणो-
पेतंयवानंदोषवर्जितं ॥ योश्वंददातिविप्रायस्वर्गलोकेमहीयते ॥ तथा ॥ यावंतिरोमाणिहयेभवंतिहिनरेश्वर ॥ तावतोवाजिदाल्लोका-
न्प्राप्नुवंतीहपुष्कलानिति ॥ वाजिदानात्सूर्यलोकान् ॥ कौर्मे ॥ शतैःपंचपलैरौप्यैःसुवर्णालंकृतिंक्रमात् ॥ सदक्षिणंसवस्त्रंचब्राह्मणा-

यनिवेदयेत् ॥ ब्राह्मणायंदत्वावस्त्रालंकरणगंधपुष्पादिरभ्यर्च्यदद्यात् ॥ ॥ अद्येतत्रादि-समस्तपापक्षयपूर्वकाश्वरोमसमसंख्याकाब्दसूर्य-
लोकनिवासावाप्तिकामइमम्श्वंसर्वोपस्कारहिरण्यदक्षिणायुतयमदैवतंगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेतिअश्वकर्णधृत्वादद्यात् ॥ दानमंच
त्र ॥ उच्चैःश्रवास्त्वंमश्वानांराज्ञांविजयकारक ॥ सूर्यवाहनमस्तुभ्यमतःशांतिप्रयच्छमे ॥ अथश्वेताश्वदानम् । गारुडे ॥ अश्वमेधमखं
यस्तुकलौकर्तुमनीश्वरः ॥ अश्वदानंततेनेहकर्तव्यंविधिपूर्वकम् ॥ विधिंतस्यप्रवक्ष्यामिब्रह्मणानिर्मितंपुरा ॥ श्वेतमश्वंशुभंतातहेमपल्या-
णभूषितं ॥ हैम्यैश्चकटकैःशुद्धैःकारितंतोपशोभितं ॥ वज्रनेत्रंखुरैस्ताम्रैःक्षौमपुच्छंसुवाससम् ॥ शुभेणपदकेनैवसंयुतंस्वायुधान्वितम् ॥ धा-
नत्ररंतोपरिस्थन्तुवद्धपक्षसुपट्टकः ॥ एवंस्तुतेजसंचाश्वंब्राह्मणायनिवेदयेत् ॥ मन्वादियुगाद्ययनेविषुवोपरागादिपुण्यकालेदानंकार्यम् ॥
ब्राह्मणायदत्वावस्त्रालंकारादिभिःसंपूज्याश्वञ्चसंपूज्यवदेत् ॥ मार्त्तंडायसुवेगायकाश्यपायचिमूर्त्तये ॥ जगद्दीपायसूर्यायचिवेदायनमोस्तुते ॥
एवंतमुच्चरन्मन्त्रंकर्णेदद्यात्तिलोदकम् ॥ ॥ दानवाक्यंतु ॥ ॥ अद्येतत्रादिगोत्रायशर्मणेब्राह्मणायेमंश्वेताश्वंसुवर्णतिलकालंकार-
युतंललाटग्रैवेयकपूर्वाङ्गालंकारैर्युक्तंगंधपुष्पाद्यर्चितंसूर्ययमदैवतंसकलब्रह्महत्यादिपापनाशकामोहयरोमसमसंख्याकाब्दसूर्यलोकनिवासका
मश्वसालंकृतायतुभ्यमहंसंप्रददेनममेति ॥ ततोश्वप्रार्थना ॥ महार्णवेसमुत्पन्नोउच्चैःश्रवसपुलकः ॥ मयात्वंविप्रमुख्यायदत्तोहयसुखीभवेति ॥
ततोविप्रप्रार्थना ॥ इमंविप्रनमस्तुभ्यमश्वन्तेप्रतिपादितम् ॥ प्रतिगृह्णीष्वविप्रेंद्रमयादत्तसुशोभनमिति ॥ इतिदानमंत्रमुच्चार्यकर्णेसमर्पणं-

विप्रे दैवस्वत्वे तिगृहीत्वा यथाशाखं कामस्तु तिस्र पठित्वा स्वस्तीतु रक्ताश्वमारुह्य गच्छेत् ।
कृत्वा विप्रहस्ते जलं क्षिपेत् ॥ ततः सुवर्णं दक्षिणां दद्यात् ॥ विप्रे दैवस्वत्वे तिगृहीत्वा यथाशाखं कामस्तु तिस्र पठित्वा स्वस्तीतु रक्ताश्वमारुह्य गच्छेत् ॥
कृत्वा विप्रहस्ते जलं क्षिपेत् ॥ ततः सुवर्णं दक्षिणां दद्यात् ॥ श्वेतमश्वं तु यो दद्यात्फलं दशगुणं भवेत् ॥ एवं कृ
दाता चाश्वपुरोगच्छेत्पदानां सप्तसप्ततिम् ॥ भास्करं मनसि ध्यात्वा आलोक्य स्वगृहं व्रजेत् ॥ श्वेतमश्वं तु यो दद्यात्फलं दशगुणं भवेत् ॥ एवं कृ
दाता चाश्वपुरोगच्छेत्पदानां सप्तसप्ततिम् ॥ भास्करं मनसि ध्यात्वा आलोक्य स्वगृहं व्रजेत् ॥ ॥ गारुडे ॥ शिवायाश्वमलंकृत्य यः प्रयच्छति
तेन रथ्याघसूर्यलोकं व्रजेन्नर इति ॥ ॥ इति श्वेताश्वदानम् ॥ ॥ अथ शिवायाश्वदानम् ॥ ॥ गारुडे ॥ शिवायाश्वमलंकृत्य यः पवशिनि
तेनरथ्याघसूर्यलोकं व्रजेन्नर इति ॥ ॥ इति श्वेताश्वदानम् ॥ ॥ अथ तिलदानं ॥ ॥ आदित्यपुराणे ॥
वेदयेत् ॥ सोऽश्वमेधस्य यज्ञस्य फलमष्टगुणं लभेदिति ॥ शिवाधर्मेपि शिवायाश्वदानम् ॥ ॥ अथ तिलदानं ॥ ॥ आदित्यपुराणे ॥
वेदयेत् ॥ सोऽश्वमेधस्य यज्ञस्य फलमष्टगुणं लभेदिति ॥ ॥ तथा ॥ ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां
वैशाख्यां पौर्णमास्यां वा तिलान्क्षौद्रेण संयुतान् ॥ यः प्रयच्छेद् द्विजातिभ्यः सर्वपापैः प्रमुच्यते ॥ ॥ तथा ॥ ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां
वैशाख्यां पौर्णमास्यां वा तिलान्क्षौद्रेण संयुतान् ॥ यः प्रयच्छेद् द्विजातिभ्यः सर्वपापैः प्रमुच्यते ॥ सर्वसत्वसमाकीर्णं नरकं न स पश्य-
विशेषतः ॥ अश्वमेधस्य यज्ञस्य फलमाप्नोति मानवः ॥ ॥ तथा ॥ माघे मासि तिलान्यस्तु ब्राह्मणेभ्यः प्रयच्छति ॥ सर्वसत्वसमाकीर्णं नरकं न स पश्य-
विशेषतः ॥ अश्वमेधस्य यज्ञस्य फलमाप्नोति मानवः ॥ ॥ दत्तानेतानि विधिवत्तारयंति महाभयात् ॥ तथा ॥ तिल
ति ॥ ॥ विष्णुधर्मोत्तरे ॥ ॥ तिला गावो हिरण्यं च अलंकनत्रावसुंधरा ॥ दत्तानेतानि विधिवत्तारयंति महाभयात् ॥ तथा ॥ तिल
ति ॥ ॥ विष्णुधर्मोत्तरे ॥ ॥ तिलभुक्तिलदाता च षट्तिलाः पापनाशनाः ॥ ॥ इदं तु माघमासपरम् ॥ ॥ अनत्र तु दा-
स्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ॥ ॥ तिलभुक्तिलदाता च षट्तिलाः पापनाशनाः ॥ ॥ इदं तु माघमासपरम् ॥ ॥ अनत्र तु दा-
स्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ॥ ॥ द्रोणैकं वाससाच्छन्नं त्रिधातद्वत्सदक्षिणं ॥ ब्राह्मणाय च तं दत्वा सर्वं तरति दुष्कृ-
नमेव ॥ कौर्मे ॥ कृष्णाजिने तिलान्कृत्वा सुवर्णं मधुसर्पिषी ॥ द्रोणैकं वाससाच्छन्नं त्रिधातद्वत्सदक्षिणं ॥ ब्राह्मणाय च तं दत्वा सर्वं तरति दुष्कृ-
नमेव ॥ कौर्मे ॥ कृष्णाजिने तिलान्कृत्वा सुवर्णं मधुसर्पिषी ॥ अद्येत्यादि अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय सुपूजिताय कृष्णाजिनस्थ सुवर्णमधुसर्पियुत वस्त्राच्छिन्नं तिलद्रोणं सोमदैवतं सर्वपापक्षय
तमिति ॥ अद्येत्यादि अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय सुपूजिताय कृष्णाजिनस्थ सुवर्णमधुसर्पियुत वस्त्राच्छिन्नं तिलद्रोणं सोमदैवतं सर्वपापक्षय
तमिति ॥ अद्येत्यादि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय सुपूजिताय कृष्णाजिनस्थ सुवर्णमधुसर्पियुत वस्त्राच्छिन्नं तिलद्रोणं सोमदैवतं सर्वपापक्षय
तमिति ॥ अद्येत्यादि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय सुपूजिताय कृष्णाजिनस्थसुवर्णमधुसर्पियुतवस्त्राच्छिन्नं तिलद्रोणं सोमदैवतं सर्वपापक्षय
तमिति ॥ अद्येत्यादि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय सुपूजिताय कृष्णाजिनस्थसुवर्णमधुसर्पियुतवस्त्राच्छिन्नं तिलद्रोणं सोमदैवतं सर्वपापक्षय
कामस्तु भ्यमहं संप्रददे न मम इति दद्यात् ॥ कृतैतत्तिलद्रोणस्य सांगतासिद्ध्यर्थं इदं सुवर्णमग्निदैवतं दक्षिणात्वेन तुभ्यमहं संप्रददे न मम इति दद्यात् ॥

प्रतिगृहीतातु देवस्यत्वेतितांगृह्यथाशाखंकामस्तुतिंपठित्वासमापयेत् ॥ ॥ इतितिलद्रोणदानविधिः ॥ ॥ अथतिलपात्रदानम् ॥ ॥ आह्ने ॥ ताम्रपात्रंतिलैःपूर्णंप्रस्थमात्रंद्विजायच ॥ सहिरण्यंचयोदद्यात्कृतत्रहृंय्यद्वयान्वितः ॥ सर्व्वपापविशुद्धात्मालभतेपरमांगतिमितिअद्येत्यादि॰इदन्तिलपरिताम्रपात्रंसोमदैवतंससुवर्णममुकगोत्रायामुकशर्मणेब्राह्मणायाशेषपापक्षयकामस्तुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ तिलाःस्वर्णयुतास्तुभ्यंप्रदत्ताह्यघनाशनाः ॥ विष्णुप्रीतिकरानित्यमतःशांतिंप्रयच्छमे । प्रतिग्रहःप्राग्वत् ॥ इतिमाघेनितंत्रतिलपात्रदानं ॥ ॥ अथमहातिलपात्रम् ॥ ॥ कौर्मे ॥ ताम्रपात्रेतिलांकृत्वापलषोडशकल्पिते ॥ ससुवर्णंनशक्त्यावाविप्रायप्रतिपादयेत् ॥ नाशयेत्त्रिविधंपापंवाङ्मनःकायसंभवम् ॥ तिलपूर्णताम्रपात्रंसहिरण्यंद्विजायवै ॥ प्रातर्दत्वातुविधिवद्दुःस्वप्नंविनिहंतिसः ॥ तिलपात्रंत्रिधाप्रोक्तंकनिष्ठोत्तममध्यमम् ॥ ताम्रपात्रंदशपलंजघन्यंपरिकीर्तितम् ॥ द्विगुणंमध्यमंप्रोक्तंत्रिगुणंचोत्तमंस्मृतम् । स्वर्णमेकंजघन्यंतुद्विगुणंमध्यमंमतम् ॥ त्रिगुणंचोत्तमंतद्वत्सुवर्णंपरिकीर्तितम् ॥ पलसंख्यानिष्कद्वयमिता ॥ सपादनिष्कद्वयमित्यन्ये ॥ अत्रदेशाचारतोव्यवस्था । दानवाक्यंतुनित्यतिलपात्रदानवत् ॥ मंत्रस्तु ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुमेसदेति ॥ इतिमहातिलपात्रदानं ॥ कौर्मे ॥ अथमातुराहृण्यत्वतिलपूर्णकांस्यपात्रदानं ॥ आदित्यपुराणे ॥ यत्नसौनाममर्णिकर्तुंयदिशक्तिर्नविद्यते ॥ महासरस्तथावापीकूपंकर्त्तुंचदैर्घिकम् ॥ एवंकृतेमातृऋणान्मुक्तोभवतिमानवः ॥ सदक्षिणंकांस्यपात्रंदत्वाचैवप्रमुच्यते ॥ शुद्धंकांस्यपात्रस्यप्रमा-

णांपंचविंशतिःपलानि । तिलानामत्रनिर्दिष्टंप्रस्थानांसप्तकंतथा ॥ सुवर्णमाषाश्चत्वारःपात्रस्योपरिधारयेत् ॥ वस्त्रेणवेष्टयेत्पात्रंविधायच-
सुभक्तितः ॥ स्नानंकृत्वानिम्नगायांपितॄन्देवांश्चतर्पयेत् ॥ ततोभिपूजयेदेकंशंकरंहरिमेवच ॥ गोमयेनाथसंलिप्यगृहमध्यंतुसर्वतः ॥ लि-
खेत्पद्मंद्वादशारंकुंकुमेनाथशोभनं ॥ ततोवन्हिंसुसंस्थाप्यहोमंकुर्याद्यवैस्तिलैः ॥ पद्मपात्रंप्रतिष्ठाप्यपूजयेद्भक्तिभावतः ॥ ततोत्रब्राह्मणामाहू-
यबहूपुत्रंसुसंभृतम् ॥ पादौप्रक्षाल्यविधिवन्मातुःश्राद्धंसमाचरेत् ॥ अथकृत्यम् ॥ यथाशक्तिमाघ्यांवामृतवासरे । ग्रहणेरविभौमाभ्यांसं-
क्रांतिषुयुगादिषु ॥ तथान्यदपियद्दत्तंमाघ्यामुद्दिश्यमातरं ॥ तदक्षयंफलंसर्वंपुराप्राहमहेश्वरः ॥ जीवन्तिभूषयेद्वस्त्रैर्माल्यैरपिविभूषणैः
दत्वाविप्रस्यतत्पात्रंहोमंकुर्यात्प्रयत्नतः ॥ सोपस्करंसतांबूलंत्समाप्यचविसृजेच्च ॥ अन्येषामपिविप्राणांभोजनानिप्रदापयेत् ॥ ॥ अथा
स्यप्रयोगः ॥ ॥ माघ्यांपूर्वोक्तपुण्यकालेवायजमानःकृतनित्यक्रियःपूर्वोक्तद्वादशारपद्मेकांस्यपात्रंप्रस्थसप्ततिलैःपूरितंस्थापयित्वाहरंहरिंवासंपू-
ज्यतत्पुरतोग्नौविष्णुंविष्णुमंत्रेणशिवंशिवमंत्रेणवाष्टोत्तरशतंघृताक्ततिलैःयवैश्चहुत्वाब्राह्मणामाहूयोदङ्मुखमुपवेश्यादौपादप्रक्षालनादि-
मातृश्राद्धंसमाप्याचम्यप्राणानायम्य ॥ अद्येत्यादिगोत्रायशर्मणेब्राह्मणायउक्तोपस्करसंयुतंममानुःगर्भधारणपोषणामलमूत्रादिनानादुःखो-
द्भवायाहृणत्वकामःइदंपंचविंशतिपलात्मकंकांस्यपात्रंप्रस्थसप्तमिततिलैःपरिपूरितंमाषचतुष्टयसुवर्णयुतंवस्त्रसंवेष्टितंसर्वोपस्करयुतंतुभ्यमहंसं-
प्रददेनममेतिदद्यात् ॥ मन्त्रास्तु ॥ कांस्यपात्रंमयादत्तंमातुरानृण्यकाम्यया ॥ भगवन्वचनात्तुभ्यंयथाशक्तिस्तथाकुरु ॥ दशमासांश्चउदरेजन

नत्रा:संस्थितस्यमे ॥ क्लेशितावालभावेनस्तनपानाद्द्विजोत्तम ॥ मलमूत्रादिमल्लेपलिप्तायाचकृतामया ॥ भवतोवचनादद्यममसुक्तिर्भवेद्ध-
यात् ॥ तिलसंख्याकृतंदु:खंजननत्रामममसेवितम् ॥ कांस्यपात्रप्रदानेनकृतकृत्याभवाम्यहम् ॥ तत:शक्त्याहिरण्यंदद्यात् ॥ पात्रदानेनजन-
नीसंभवादृणात्वमुक्तोभव ॥ पुन:व्याहृतिभिराज्यहोमंकृत्वाविसृज्ययथाशक्तिब्राह्मणान्भोजयित्वासुहृद्युतोभुंजीतेति ॥ ॥ इतिमा-
तराहृण्यत्वंतिलपूर्णकांस्यपात्रदानप्रयोग: ॥ ॥ अथतिलपर्णकरकदानम् ॥ ॥ वायवीये ॥ करकंतिलसंपूर्णंमंडलेवन्हिदैवते ॥ शि-
ववन्हिवदाराधंत्रपूजयेत्करवीरकै: ॥ पूजातुरक्तचंदनेननिर्यास: सर्जरसधूपेनधूपयेत् ॥ वन्हिमंडलंतुकोणमण्डलम् ॥ शिवंवन्हिवदितिवन्हिस्व
रूपंशिवम् ॥ ॥ ब्रह्माण्डपुराणे ॥ ॥ आदर्शंचततोदद्यादीपानांचचतुष्टयम् ॥ वन्हिरूपीयत:शंभुर्वन्हिरूपास्तिलाश्रया: ॥ तेजोरूप-
कृतंपापंचाह्नपंचव्यपोहतु ॥ इतिदत्तेश्यनस्यंतिपापाद्यन्यकृतानिच ॥ परदारपरद्रव्यपत्रदर्शनजातिच ॥ शिवादिदर्शनोत्थानिनेत्रदोषकृ
तानिच ॥ यएवंकुरुतेदानंशिवभक्त्यायतव्रत: ॥ शिवलोकेवसेद्भूय:कल्पत्रयमशंकित: ॥ ॥ इतितिलपूर्णकरकदानम् ॥ ॥ अथगजदानं
कौर्मे ॥ दद्याद्गजंपुराणोक्तंमूल्यंपंचशतानिवा ॥ वित्तानुसारात्त्रापिकनिष्ठोत्तममधत्रमम् ॥ तत्रापिस्वरूपतोगजदानमुत्तमम् ॥ तन्मू-
ल्यहेममाषशतपंचकदानंमधत्रमम् ॥ शतत्रयहेममाषदानंकनिष्ठमिति ॥ रूप्यस्थूणालंकरणांस्वर्णताराविभूषणाम् ॥ सदत्त्विणांवित्तशक्त्या
दत्त्वाशिवपुरंव्रजेत् ॥ स्थूणारज्जु: ॥ तारामौक्तिकजालीगजालंकार: ॥ ॥ कौर्मे ॥ ॥ यथालाभोपपन्नेवाय:प्रयच्छतिदन्तिनम् । ब्रा-

ह्मणायदरिद्रायस्वर्गलोकेमहीयतइति ॥ ततोगजदानांगंशिवंद्विजंचसंपूजयेद्दद्यात् ॥ ॥ दानवाक्यंतु ॥ अद्येत्यादिममसर्वपापक्षयोत्त
रसिद्धचारणसेविताकर्किंकिणीजालमालिविमानारोहणोत्तरानेकमन्वंतरावच्छिन्नाक्षयदेवराजत्वांतेविष्णुपुरावाप्तिकामस्तत्प्रीतिकामश्चसालं
कृतायामुकगोत्रायामुकशर्मणेब्राह्मणायेमंगजंकक्षारज्जुस्थिरासनसहितंकांचनमालादिकीर्णंचामरगंधपुष्पाद्यलंकृतंप्रजापतिदैवतंतुभ्यमहंसं
प्रददेनममेतिकरंधृत्वाद्दद्यात् ॥ करःशुंडादण्डः ॥ ॥ कृतैतद्गजदानकर्मणःसांगतासिध्यर्थंइदंसुवर्णंअग्निदैवतंदक्षिणात्वेनतुभ्यमहंसंप्रद -
देनममेतिदद्यात् ॥ ततोद्विजोगजमारुह्यदेवस्यत्वायथाशाखंकामास्तुतिंपठित्वाप्रतिगृह्णामीतिस्वस्तीतिवदेत् ॥ यजमानोगजप्रार्थयेदेतैर्मं-
त्रैः ॥ ॥ ऐरावतस्त्वतुदंतोगजानांनायकस्तुयः ॥ ॥ द्विवदंतिनांपूजत्रतमःपापंक्षयतुनःप्रभुः ॥ सुप्रतीकगजेन्द्रत्वंसरस्वत्याभिषेचक ॥ इ
न्द्रस्यवाहनश्रेष्टसर्वदेवैस्तुपूजित । गजेंद्रमत्तमातंगदैत्यसैन्यविनाशक ॥ तवदानेनमेशांतिःसर्वदास्तुमहत्सुखमिति ॥ ब्राह्मणैस्तथास्तुइ-
त्युक्तोभूयसींदद्यादिति ॥ ॥ इतिगजदानप्रयोगः ॥ ॥ अथदासीदानं ।' ॥ वन्हिपुराणे । ॥ स्थिरनक्षत्रसंयुक्तेसौम्येसौम्यग्रहा-
न्विते ॥ दानकालंप्रशंसंतिसंतःपर्वणिवापुनः ॥ अलंकृतयथाशक्त्यावासोभिर्भूषणैस्तथा ॥ ब्राह्मणायप्रदातव्यायजमानेनशक्तितः ॥ पंच-
वर्षाधिकासातचत्वारिंशत्समावधि ॥ दासीद्विजायदातव्यादासदानेत्वयंविधिरिति ॥ दानवाक्यंतु ॥ अद्येतयादिगोत्रायशर्मणेसालंकृतायसु
वर्णालंकारवतींगंधपुष्पाद्यर्चितांप्रजापतिदैवतयांअक्षयसुखावाप्तिकामस्तुभ्यमहंसंप्रददेनममेतिशिरसिधृत्वाद्दद्यात् ॥ द्विजप्रार्थनामंत्रस्तु ॥

वह्निपुराणे ॥ इयंदासीमयातुभ्यंश्रीवत्सप्रतिपादिता ॥ सर्वकामकरीभोग्यायथेष्टंभद्रमस्तुमे ॥ ततःसुवर्णंदक्षिणांदत्वानमस्कुर्यात् ॥
अनुगत्वातुसीमायांद्विजंचैवविसर्जयेदिति ॥ ॥ इतिदासीदानम् ॥ ॥ अथरथदानम् ॥ कौर्मे ॥ रथंचतुर्बलीवर्दैर्दृढंधान्याढ्यंतंतथा ॥
वित्तानुसारात्सर्वैश्चरथोपकरणैर्युतं ॥ सदक्षिणंचविप्रायदत्वाशिवपुरंव्रजेत् ॥ धान्याढ्यंतंअष्टादशधान्याढ्यतम् ॥ रथोपकरणानियुगयो-
क्त्रतोत्रवरत्रादीनि ॥ दक्षिणाचत्रिशतमाषमितसुवर्णमुत्तमा ॥ द्विशतेमध्यमा ॥ अधमाशतैकमिति ॥ त्रैविध्यमाह ॥ ॥ हेमाद्रिः
दानवाक्यंतु ॥ अद्येत्यादिगोत्रायशर्मणेसालंकृतायचतुर्बलीवर्दैर्युक्तंसोपस्करंधान्याष्टादशभिर्युतंविश्वकर्मदैवतंअक्षयस्वर्गादिसुखावाप्तिका-
मस्तुभ्यमहंसंप्रददेनममेतिमंत्रस्तु ॥ रथायरथनाथायनमस्तेविश्वकर्मणे ॥ विश्वरूपायदेवायअरुणायनमोस्तुते ॥ सुवर्णंदक्षिणांदद्यात् ॥
इतिरथदानम् ॥ ॥ अथगंत्रीरथदानम् ॥ गारुडे ॥ ॥ गंत्रींतुरगसंयुक्तांयोददातिद्विजातये ॥ सर्वकामसमृद्धात्मासराजाजायतेभु-
वीति ॥ गंत्रीरथविशेषःसाचतुर्भिर्गजैरश्वैर्वृषैर्वोपेताद्वाभ्यांवोपेता ॥ दानवाक्यंतुपूर्ववत् ॥ मन्त्रस्तु ॥ गंत्रीमिमांप्रयच्छामिविश्वकर्माधि
दैवताम् ॥ दानेनानेनभगवान्प्रीयतांमेपरःपुमानिति ॥ ततःसुवर्णंदक्षिणांदद्यात् ॥ ॥ इतिगंत्रीसहितरथदानम् ॥ ॥ अथप्रसंगा-
च्छिविकादानम् ॥ हेमाद्रौमात्स्ये ॥ मार्गशुक्लैकादश्यांमाघफाल्गुनयोर्वैशाखेवाहिरण्मयंहरिमभ्यर्च्यरात्रौजागरणंकृत्वाप्रातःकृतनि-
त्यक्रियः ॥ ॥ अद्येत्यादिगोत्रायशर्मणेसुपूजितायइमांशिविकामुक्तोपस्करांअंगिरोदैवतांइष्टलोकावाप्तयेतुभ्यमहंसंप्रददेनममेति ॥ ततः

सुवर्णंदक्षिणांदद्यात् ॥ ॥ तत्रैववन्हिपुराणे ॥ ॥ देवलोकेविपुलभोगानंतरमंतेविष्णुसायुज्यावाप्तिकामोविप्रस्यवर्षासनंशिविकावाह-
कानांचवर्षपर्याप्तमन्नं दद्यादितिहेमाद्रि ॥ ॥ द्विजप्रार्थनामन्त्रस्तु ॥ शिविकातेमयादत्तायथाशक्त्याविभूषिता ॥ द्विजत्वंप्रतिगृह्णीष्ववां-
छितंतेनमेभवेदिति ॥ ॥ इतिशिविकादानम् ॥ ॥ अथमहीदानम् ॥ कौर्मे ॥ ॥ गोचर्ममात्रंभूखण्डमधिकंवास्वशक्तितः ॥ वि-
धीन्सदक्षिणांकृत्वादत्वाशिवपुरंव्रजेदिति ॥ त्रिदंष्ट्रकसुवर्णदक्षिणेत्यर्थः ॥ अपिगोचर्ममात्रेणसम्यग्दत्तेनमानवः ॥ धौतपापोविशुद्धा-
त्मास्वर्गलोकेमहीयतइति ॥ तथा दशहस्तेनदंडेनत्रिंशद्दण्डानिवर्तनम् ॥ त्रिभागहीनंगोचर्ममानमाहप्रजापतिः ॥ तथा ॥ गवांशतंवृष-
श्चैकोयत्रतिष्ठेदयन्त्रितः ॥ तद्धिगोचर्ममात्रंतुप्राहुर्वेदविदोजनाः ॥ तथा ॥ षष्ठिवर्षसहस्राणिस्वर्गेवसतिभूमिदः ॥ आच्छेत्तावानुमन्ताच
तावंतिनरकेवसेत् ॥ भूमिंयःप्रतिगृह्णातिभूमिंयश्चप्रयच्छति ॥ तावुभौपुरुषौलोकेसूर्यमण्डलभेदिनौ ॥ ॥ तथा ॥ ॥ भूमिप्रदानपु-
ण्यस्यकलांनार्हंतिषोडशीम् ॥ दानान्यन्यानिमेशांतिर्भूमिदानाद्भवत्विहेति ॥ ॥ दानवाक्यंतु ॥ ॥ अद्येत्यादिगोत्रायशर्मणेमाल्लं
कृतायषष्ठिवर्षसहस्रमितस्वर्गेशिवपुरनिवासकामःसर्वपापक्षयकामोवाइमांभूमिंसस्योद्भवांसदृक्षफलपुष्पाद्युपेतांविष्णुदैवतांतुभ्यमहंसंप्रददेन-
ममेतिसाक्षतकुशतिलोदकंद्विजहस्तेदद्यात् । ब्राह्मणस्तुभूमिंप्रदक्षिणांकुर्वन्प्रतिगृह्णीयात् ॥ देवस्यत्वेतियथाशाखंकामस्तुतिम्पठित्वास्व-
स्तीतिवदेत् ॥ मांडव्यवचनादत्रसुवर्णदक्षिणामता ॥ ॥ मन्त्रस्तु ॥ ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनन्तसस्यफलदा-

अतःशांतिंप्रयच्छमे ॥ तथा ॥ यस्यांरोहंतिबीजानिवर्षाकालेमहीतले ॥ भूमेःप्रदानात्सकलाममसंतुमनोरथाइति ॥ शिवधर्मेविश्वामित्रः ॥
ग्रामंवानगरंवापिविप्रेभ्योयःप्रयच्छति ॥ क्षेत्रंवासस्यसंपन्नंसर्वपापैःप्रमुच्यतइति ॥ ॥ भूमिहरणेतुविश्वामित्रः ॥ स्वदत्तांपरदत्तांवायो
हरेच्चवसुंधराम् ॥ षष्टिवर्षसहस्राणिविष्टायांजायतेकृमिरिति ॥ सविष्ठायांकृमिर्भूत्वापितृभिःसहमज्जतीतिवा ॥ ॥ इतिशिवधर्मेभूप्रदा
नम् ॥ ॥ अथगृहदानम् ॥ ॥ कौर्मे ॥ ॥ शक्तितःसर्वबित्तेनपर्णगृहमपिविधा ॥ सदद्यिर्गांद्विजेदत्वाब्रह्मलोकंव्रजेन्नरइति ॥ गा
रुडे ॥ ॥ ऐष्टिकंदारुकंवापिमृन्मयंवापिशक्तितः ॥ सर्वोपकरणोपेतंयोदद्याद्विपुलंगृहम् ॥ ब्राह्मणायदरिद्रायविदुषेचकुटुंबिने ॥ सर्व
कामसमायुक्तोब्रह्मसायुज्यमाप्नुयादिति ॥ ब्रह्मवैवर्त्ते ॥ ॥ नगार्हस्थ्यात्परोधर्मोनैवदानंपरंगृहात् ॥ नानृतादधिकंपापंनपूज्योब्रा-
ह्मणात्परइति ॥ ॥ गृहनिर्माणप्रकारमाहनारदः ॥ ॥ स्नानागारंदिशिप्राच्यामाग्नेय्यांपचनालयम् ॥ याम्यांशयनगेहंचनैऋतयांशस्त्रमं-
दिरम् ॥ प्रतीच्यांभोजनागारंवायव्यांपशुमंदिरम् ॥ भांडागारंतत्तरस्यामैशान्यांदेवमंदिरमिति ॥ कुर्यादितिशेषः ॥ तत्रकूपेदिक्-
विशेषफलंदेवीपुराणे ॥ पूर्वमाश्रित्यकर्तव्यःकूपःस्यादनिलेपिवा ॥ नपूर्वंच्यत्ययंकुर्यान्मध्येत्रदेवालयागृहादिति ॥ कृतंभयप्रदंलोकेतथा-
चास्याग्निजंभयं ॥ वायव्यांचाग्निदेवस्यभयदंजायतेकृतमिति ॥ ॥ वराहमिहिरः ॥ ॥ पुष्टिंभूतिंपुत्रहानिंपुरंध्रीनाशंमृत्युंसंपदंशस्त्र
बाधां ॥ किंचित्सौख्यंदिक्षुपूर्वादिकुर्यात्कूपोमध्येगेहमर्थक्षयंचेत्यादि ॥ मत्स्यपुराणे ॥ देवतापंचकंतत्रचत्वारिशत्समाहृतम् ॥ पूज

यित्वा यथाम्नायं ततोदद्याद्गृहं गृही ॥ पूजयित्वा स्वयं वास्तुशांतिं कृत्वा दद्यादित्यर्थः ॥ अथ प्रसंगात्संक्षेपेण वास्तुशांतिप्रयोगः ॥ ॥ कर्ता शु-
भदिने आचम्य प्राणानायम्य देशकालौ संकीर्त्य अस्य वास्तोः शुभतासिध्यर्थं वास्तुशांतिं करिष्ये इति संकल्प्य ॥ तदंगतया गणेशपूजा स्वस्तिवाचनमा-
तृकापूजा अभ्युदयिकश्राद्धाचार्य ब्रह्मर्त्विग्वरणानि कृत्वा यथाविभवं वस्त्रालंकारादिभिः पूजयेत्ततः आचार्यो यदत्र संस्थितं भू० ॥ अपक्रामन्तु०
भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः ॥ स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमि भुवं त्विमामिति ॥ अनेन सर्षपान्विकीर्य पंचगव्येन शुचीवो हव्या इ-
त्यृचेन पूर्नतमादेवजना इत्यृचेन गृहमाविभीत एतोन्विंद्रमित्यृचेन गृहं संप्रोक्ष्य गृहमध्ये प्राच्यामैशान्यां वा चतुरस्रं चतुरंगुलोच्चम् हस्तमितं स्थण्डिलं
कृत्वा तस्य ईशानादिकोणचतुष्टये चतुरो लोहकीलानारोपयेत् ॥ विशंतु भूतले नागा लोकपालाश्च सर्वशः ॥ अस्मिन् गृहे वतिष्ठंतु आयुर्बलक-
राः सदेति मंत्रेण निखनेत् ॥ ॥ प्रतिकीलं मंत्रावृत्तिः । ॥ ततः ईशानकोणादिक्रमेण चतुर्षु कोणेषु ॥ अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये त-
त्समाश्रिताः ॥ तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तममिति मंत्रेण मंत्रावृत्त्या माषभक्तबलीं दत्वा ॥ स्थण्डिलोपरि कुंकुमादिना हेमदण्डेन शला-
कया वा प्राक्पश्चायताः प्रागंता उदक्संस्था द्व्यंगुलांतराः प्रणवादिनमोंतैर्दशभिर्नामभिर्दशरेखाः कुर्यात् । ॐईशानायैनमः ॥ ॐयशोवत्यै० ॥
ॐकांतायै० ॐविशालायै० ॐप्राणवाहिन्यै० ॐसत्यै० ॐसुमत्यै० ॐनंदायै० ॐसुभद्रायै० ॐसुरथायै० ॥ १० ॥ इति दशरेखाः-
कृत्वा ॥ तथा ॐहिरण्यायै० ॐसुव्रतायै० ॐलक्ष्म्यै० ॐविभूत्यै० ॐविमलायै० ॐप्रियायै० ॐविजयायै० ॐवालायै० ॐविशो

कायै॰ ओंइडायै॰ ॥ १॰ ॥ इतिदक्षिणोत्तरायताःउदगंताःप्राक्संस्थादशरेखाःकुर्यात् ॥ एवमेकाशीतिपदमण्डलंसम्पद्यते ॥ तत्रमध्य-
स्थनवकोष्ठानिरेखामार्जनेनैकीकुर्यात् ॥ एतन्नवपदंब्रह्मस्थानन्तस्यचतुर्दिक्षुचत्वारिपदानिविदिक्षुशृङ्खलाकाराणिद्वादशकोणचतुष्टयेभयत-
स्त्राष्टावितिविंशत्येकपदानिअवशिष्टानिप्रतिदिशंपंचपंचेतिविंशतिर्द्विपदानि ॥ तेषुप्रणवाद्यैश्चतुर्थ्यंतैर्नमोंतैर्वक्ष्यमाणनामभिर्देवताआवाह्य
स्थापयेत् ॥ तत्रैशानकोणपदेवास्तोःशिरसि ॥ ओंशिखिनेनमः ॥ शिखिनंआवा॰ ॥ तद्दक्षिणैकपदेदक्षिणनेत्रे ओंपर्जन्या॰ ॥ आवाहयामि-
मितिसर्वत्र । तद्दक्षिणेततोपिपश्चिमतद्वितिपदद्वयेदक्षिणश्रोत्रे ओंजयन्तायनमः । तद्दक्षिणपदद्वयेदक्षिणांसे॰ ओंकुलिशायुधायनमः ॥ ४ ।
तद्दक्षिणपदद्वयेदक्षिणबाहौ॰ ओंसूर्यायनमः ॥ ५ । तद्दक्षिणपदद्वयेदक्षिणबाहौ ओंसत्यायनमः ६ । तद्दक्षिणपदद्वयेदक्षिणकूर्परे ओं-
भृशायनमः । ७ । तद्दक्षिणेअसपंक्तिगतैकपदेदक्षिणप्रबाहौ ओंआकाशाय॰ ८ आग्नेयकोणपदेदक्षिणबाहवे ओंअग्नयेनमः ९ तत्पश्चि-
मैकपदेदक्षिणमणिबन्धे ओंपूष्णेन॰ १० तत्पश्चिमेततोप्युक्तवद्द्वितिपदद्वयेदक्षिणपार्श्वे ओंवितथाय॰ ११ तत्पश्चिमपदद्वयेदक्षिणपार्श्वेएवओं
गृहक्षताय॰ १२ तत्पश्चिमपदद्वयेदक्षिणोरौ ओंयमाय॰ १३ तत्पश्चिमपदद्वयेदक्षिणजानौ ओंगंधर्वाय॰ १४ तत्पश्चिमपदद्वयेदक्षिणजंघायां
ओंभृंगराजाय॰ तत्पश्चिमेबाह्यपंक्तिगतैकपदेदक्षिणस्फिजि ओंमृगाय॰ नैर्ऋत्यकोणपदैकपदेपादयोः ओंपितृभ्यो॰ तदुत्तरैकपदेवामस्फि-
जि ओंदौवारिकाय॰ १९ तदुत्तरेततोपिप्रागितिपदद्वयेवामजंघायां ओंसुग्रीवाय॰ तदुत्तरपदद्वयेवामजानौ ओंपुष्पदंताय॰ तदुत्तरपदद्वये

वामोरौ ॐजलधिपाय॰ तदुत्तरपदद्वयेवामपार्श्वे ॐअसुराय॰ तदुत्तरपदद्वयेवामपार्श्वएव ॐशेषाय॰तदुत्तरेबाह्यपंक्तिगतैकपदेवाममणि-
बंधे ॐपापाय॰ वायव्यकोणपदेवामप्रबाहौ ॐरोगाय॰ तत्प्रागेकपदेवामप्रबाहौ ॐअहिर्बुध्नाय॰ तत्प्राक्ततोपिदक्षिणेचेतिपदद्वयेवाम-
कूर्परे ॐमुख्याय॰ तत्प्राक्पदद्वयेवामबाहौ ॐभल्लाटाय॰ तत्प्राक्पदद्वयेवामबाहौ ॐसोमाय॰ तत्प्राक्पदद्वयेवामांसे ॐसर्पेभ्योनमः
तत्प्राक्पदद्वयवामश्रोत्रे ॐदितयेनमः तत्प्राक्बाह्यपंक्तिगतैकपदेवामनेत्रे ॐअदितयेन॰ ततआग्नेयत्रकोणपदादधःकोणपदेवामहस्ते ॐ
आपाय॰ नैर्ऋत्यपदादधःकोणपदैकपदे ॐसावित्राय॰ वायव्यकोणाधःकोणपदेवामहस्ते ॐजयाय॰ ईशानकोणपदाधःकोणपदेमैंद्रे। ॐ-
रुद्राय॰ मध्यगतनवकोष्टकब्रह्मपदसंलग्नप्रागादिपदत्रयेदक्षिणस्तनेअर्यम्णे॰ तद्दक्षिणैकपदेदक्षिणहस्ते ॐसवित्रे॰ तत्पश्चिमेब्रह्मसंलग्नेप-
दत्रयेजठरदक्षिणभागे॰ ॐविवस्वते ४॰ तत्पश्चिमैकपदेदृषणयोः ॐविबुधाधिपाय॰ तदुत्तरब्रह्मसंलग्नपदत्रयेवामजठरभागे ॐमित्राय॰
तदुत्तरैकपदेवामहस्ते ॐराजयक्ष्मणे॰ तत्प्राक्पदत्रयेवामस्तने ॐपृथ्वीधराय॰ तत्प्रागेकपदेउरसि ॐआपवत्साय॰ ततोमध्यनवपदेहृन्ना-
भ्योः ॐब्रह्मणेनमः तदुत्तरेवास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप् दृषवास्तुप्रतिष्ठापनेविनियोगः ॐवास्तोष्पतेप्रतिजानी॰ इतिसुवर्णादिप्रति-
मामग्न्युत्तारणपूर्वकंसंस्थाप्यमण्डलाद्बहिरीशानादिकोणचतुष्टयेषु ॐचरक्यै॰ ॐविदार्यैनमः ॐपूतनायैनमः ॐपापराक्षस्यै॰॥ ॥तत
पूर्वादिचतुर्दिक्षु ॥ ॐस्कंदायनमः ॐअर्यम्णेनमः ॐजृंभकायनमः ॐपिलिपिच्छाय॰ ततःपूर्वाद्यष्टदिक्षु ॐइन्द्राय॰ ॐअग्नये॰ ॐय

माय० ॐनैर्ऋतये० ॐवरुणाय० ॐवायवे० ॐकुबेराय० ॐईशानाय० ॥ ६२ ॥ इत्यावाह्य ॥ वास्तुपीठदेवताभ्योनमइतिसंपूज्यम-
ण्डलादीशानदिक्कलशंसंस्थाप्यतत्रवरुणाय० इतिवरुणंसंपूज्य प्रार्थयेत् ॥ यथामेरुगिरेःशृंगंदेवानामालयःसदा ॥ तथात्रब्रह्मादिदेवानांगृहे-
ममस्थिरोभवइतिसंप्रार्थ्य ॥ ततःस्वतन्त्रस्थण्डिलेग्निस्थापनादिचक्षुष्यन्तेउदुंबरादिसमिच्चिलाज्यैर्वास्तुमण्डलदेवताभ्योनाममन्त्रैर्वाष्टसंख्यया-
हुत्वास्विष्टकृदादिपूर्णाहुत्यंतंकुर्यात् । ततोमण्डलदेवताभ्यःशिखिनेएषपायसबलिर्नममइत्यादिबलींदत्वाकृणुष्वपाजइतिसूक्तादिनामण्ड-
लंत्रिसूत्रावेष्ठयित्वाकलशोदकेनयजमानमभिषिच्यपुनःसंपूज्ययथाशक्तिदक्षिणांदत्वाब्राह्मणान्भोजयेदितिकेचित् । शारदातिलकेतुहोमो-
नोक्तः ॥ तिलादिद्रव्याणांविकल्पइतिमयूखकारः ॥ इदानींतुनवग्रहसङ्कलितमेवप्रयोगंकुर्वन्ति सांप्रदायिकाः ॥ तद्यथा ॥ यथामेरुगिरेः
शृङ्गमितिप्रार्थनोत्तरम्वास्तुमण्डलान्नैर्ऋत्याम्पश्चिमायाम्वाकुण्डेस्थण्डिलेवावरदनामानमग्निंप्रतिष्ठाप्याग्नेरीशान्यांग्रहान्ग्रहकलशंचसंस्थाप्य-
तत्रवरुणंसम्पूज्यदेवदानवसम्वादइत्याद्यैःसंप्रार्थ्यान्वादध्यात् ॥ अस्मिन्वास्तुशान्तिकर्मण्यन्वाधानङ्करिष्ये ॥ अस्मिन्नन्वाहितेत्यादिचक्षुष्यन्त
मुक्त्वाप्रधानमादित्यं- सोमम्- भौमम्- बुधम्- बृहस्पतिम्- शुक्रम्-शनिम्- राहुम्-केतुम्- एताःप्रधानदेवताःप्रत्येकंअष्टोत्तरशताष्टाविंशतिर
ष्टाष्टसंख्याकाभिर्वार्कादिसमिच्चर्वाज्याहुतिभिःतथाईश्वरं उमांस्कंदंविष्णुं ब्रह्माणम् इन्द्रंयमंकालं चित्रगुप्तं अग्निम् आपःभूमिं विष्णुं इन्द्रम्
इन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणं विनायकं दुर्गां वायुं आकाश अश्विनौ वास्तोष्पतिं क्षेत्रपालं इन्द्रम् अग्निम् यमं निर्ऋतिं वरुणंवायुंकुबेर

ईशानं एताः प्रधानदशांशेनतत्तत्समिच्चर्वाज्याहुतिभिःतथा शिखिनं पर्जन्यं जयन्तं कुलिशायुधं सूर्यं सत्यं भृशं आकाशं वायुं पूषणं वितथं
ग्रहक्षतं यमं गंधर्वं भृंगराजं मृगं पितॄन् दौवारिकं सुग्रीवं पुष्पदंतं जलाधिपं असुरं शेषं पापं रोगं अहिर्बुध्न्यं मुख्यं भल्लाटं सोमं सर्पं दि-
तिं अदितिं आपं सावित्रं जयं रुद्रं अर्यमणं सवितारं विवस्वंतं विबुधाधिपं मित्रं राजयक्ष्माणं पृथ्वीधरं आपवत्सं ब्रह्माणं चरकीं विदारीं पू-
तनां पापराक्षसीं स्कंदं अर्यमणं जंभकं पिलिपिच्छं एताः प्रधानदेवताः प्रतिद्रव्यं अष्टोत्तरशतसंख्यया समित्तिलपायसाज्याहुतिभिश्चतसृभिर्ऋ-
ग्भिः अष्टोत्तर० समित्तिलचतुर्वारं हुत्वा वास्तोष्पतिं चतुर्वारं हुत्वा वास्तोष्पतिं पंचवारं पंचभिर्बिल्वफलैस्तद्बीजैर्वा यद्वा ॥ शेषेणास्विष्टकृतमित्या-
द्याज्यभागांते यजमान इदं उपकल्पितं हवनीयद्रव्यं अन्वाधानोक्तदेवताभ्यः मयात्यक्तंनममेत्युक्त्वोत्सृजेत् ॥ ॥ ततश्चाचार्यादयः ग्रहेभ्यो होमं कृ-
त्वा तिलसमिदाज्यपायसैः शिख्यादि पिलिपिच्छांताभ्यः त्रिपंचाशद्देवताभ्यो नाममंत्रैः प्रत्येकमष्टाविंशत्यष्टाष्टसंख्याकाभिराहुतिर्वा हुत्वा ॥ वास्तो-
ष्पतिमेतैरेव द्रव्यैर्विवक्षितसंख्यया हुत्वा ध्रुवाजायनो वास्तोष्पतेति चतसृभिः प्रत्यृचमृगंते स्वाहाकारं पठन् जुहुयात् ॥ नात्र स्वाहाकारांते होमः ॥
यवादि होमे तु वास्तोष्पत इति चत्वारो मंत्राः ॥ एकैकेन च मंत्रेणाष्टाविंशतिराहुतयः ॥ इत्यष्टोत्तरशतम् ॥ ततः एतैश्चतुर्भिर्वास्तोष्पते ध्रुवा स्थू-
णामित्येकया च ॥ एवम्पंचभिः पंचबिल्वफलानि तद्बीजानि वा जुहुयात् ॥ ततश्चाचार्यः स्विष्टकृदादि प्रायश्चित्त होमांते यजमानो लोकपा-
लेभ्यो ग्रहपीठदेवताभ्यश्च बलिं दत्त्वा पूर्णाहुतिं हुत्वा शिख्यादि पंचचत्वारिंशद्देवताभ्यः ॥ शिखिने एष मायसबलिर्न ममेति ॥ इत्याद्युक्तिपूर्व-

कांसर्वेभ्योऽपिबलिंदत्वा ॥ शिख्यादिप्रीतयेकांचनद्विजेभ्योब्रह्मप्रीतयेधेनुंचदद्यात् ॥ ततोग्रहकलशवास्तुकलशोदकेनऋत्विग्भिरभिषिक्तो-
यजमानः ॥ ऋत्विग्भ्योदक्षिणांदत्वावाद्यादितूर्यघोषपूर्वकंआचार्यऋत्विग्भिःसकुटुंबोयजमानःराज्ञोप्यपावमानसूक्तैर्गृहंत्रिःसूत्रावेष्टयित्वास-
मंताद्व्रीहियवमतीभिरद्भिर्हिरण्मयमवधायशन्तातीयेनशंनइन्द्राग्नीतिपंचदशऋग्भिरितिनारायणवृत्तिः शन्तातीयेनईळेद्यावापृथिवीइतिपं-
चविंशतिऋग्भिःसमुच्चयेतिवेत्यन्ये । तेननवाशंकानचोत्तरम् । त्रिःप्रदक्षिणम्परिव्रजन्प्रोक्ष्यत्यविच्छिन्नयाचोदकधारयापोहिष्टामयोभुवइतितच्चे-
नततोविच्छिन्नक्षीरधारांचपरितोदत्वावास्तुपीठमध्यनवपदेसुरूपांपृथ्वींध्यात्वापृथिव्यैनमः ॥ ॥ इतिसंपूज्य ॥ सर्वदेवमयंवास्तुसर्वदेवम-
यंपरमितिपठित्वाततोगृहस्याग्नेयकोणेआकाशपदेयजमानपदेनजानुमात्रंगर्तंखात्वातमध्येगोमयेनोपलिप्यशुभ्रचंदनपुष्पाक्षतैरलंकृत्यसर्वधा-
न्यबीजानिदध्योदनंचक्षिप्त्वानवजलपूर्णकलशंशतैकपुष्पयुतंगंधाद्यर्चितमादायजानुभ्यामवनिंकृत्वातज्जलंगर्ते । ॐनमोवरुणायेतिमंत्रेणक्षि-
पेत् ॥ जलेप्रदक्षिणावर्तेपुष्पेचोर्ध्वमुखेशुभम् ॥ ततोऽपक्वमृत्पेटिकायांशाल्यादिसप्तधान्यबीजानिदध्योदनंशैवालंफलपुष्पाणिचक्षिप्त्वात-
र्यघोषेणपूर्वस्थापितरूपवास्तुप्रतिमामानीयपेटिकायांसंस्थाप्यपेटिकांपिधायपठेत् ॥ पूजितोसिमयावास्तोहोमाद्यैरर्चनैःशुभैः प्रसीदपाहिवि-
श्वेशदेहिमेगृहजंसुखम् ॥ वास्तुमूर्तेनमस्तेस्तुभूषयत्राभिरतप्रभो मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदेति ॥ ततोमृत्पेटिकांगर्तेस्थाप्य ॥ स-
शैलसागरांपृथ्वींयथावहसिमूर्द्धनि तथामांवहकल्याणसम्पत्सन्ततिभिःसहेति ॥ इतिसंप्रार्थ्यतथैवमृदागर्तंपूरयेत् ॥ मदग्राधिकोऽधिकंफ-

त्वम् ॥ साम्यं समम् ॥ न्यूनत्वं न्यूनम् ॥ गर्तां परिगोमयेनोपलिप्य गंधपुष्पाक्षतादिनिक्षिपेत् ॥ ततआचार्यं ब्रह्माणमृत्विजश्च संपूज्य तेभ्योद-
क्षिणां दत्वा ॥ ग्रहपीठदेवतावास्तुपीठदेवताश्च संपूज्य उत्तिष्ठब्रह्मणस्पतेदेव० ॥ ॥ अभ्यारमिदद्रये० ॥ यांतु देवगणाइतिविसृज्यग्र-
हपीठं वास्तुपीठं चाचार्याय दद्यात् ॥ ततः आचार्यः प्रणीताविमोकादिशिष्टं कर्म समाप्याग्निं विसर्जयेत् ॥ ततोयजमानो ब्रह्मणिश्वाय दक्षिणाग्र-
तयशक्त्या वा ब्राह्मणान् भोजयिष्ये इति सङ्कल्प्य विप्रान् संपूज्य भूयसीं दत्वा ॥ प्रमादात्कुर्वतांक० ॥ यस्य स्मृत्येत्युक्त्वा कर्मेश्वरार्पणं कृत्वा ॥
ब्राह्मणान् भोजयित्वा तेभ्यः शिवं वारित्विति चिरुक्त्वा शिवं वास्तु इति विप्राश्चिर्ब्रूयुः ॥ ततोयथासुखं सुहृद्युतो भुंजीतेति ॥ एवम्विधिना प्रतिसम्व-
त्सरम्वास्तुपूजनं कार्यम् ॥ तेनग्रहसंबंधोदःखनाशप्रयादित्युक्तं दानविवेके ॥ ॥ महादेवतनूजेन श्रीदिवाकरसूरिणा ॥ रचितावास्तुशांते-
स्तुपद्धतिर्बुधतोषदा ॥ ॥ इतिपौराणवास्तुशांतिप्रयोगः ॥ ॥ इदानीं सूत्रोक्ता शांतिरभिधीयते ॥ साचद्विजातीनां पूर्वोक्तयासमुच्ची-
यते ॥ पूर्वोक्तायां त्वशक्तौ स्वगृह्योक्तैव कर्तव्या ॥ तथापि सिद्धः ॥ बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् ॥ तस्य तावति शास्त्रार्थे कृते सर्वः-
कृतोभवेदिति वचनात् ॥ येषां गृह्यं नास्ति तेषां शूद्राणां च पूर्वोक्तैव ॥ तस्याः सर्वसाधारण्येन विधानात् ॥ अतश्च न शूद्रमात्रविषयत्वम् ॥ तस्मा-
त् गृह्योक्तापूर्वायां समुच्चीयते सांप्रदायिकैः ॥ ॥ अथाश्वलायनगृह्योक्तवास्तुशान्तिप्रयोगः ॥ तद्यथा ॥ काष्ठादिनिर्मितं सम्पन्नं धन्यादि
सर्वोपस्करयुतं शोभने मुहूर्ते ब्राह्मणैः सह तूर्यघोषेण गृहं प्रविश्य आगारमध्ये प्राङ्मुख उपविश्य दर्भेषु दर्भान्धारयमाणः ॥ पत्न्या सह आचम्य प्राणा-

नामधेयदेशकालौ संकीर्त्य ममास्य वास्तोः शुभतासिध्यर्थं वास्तुशांतिं करिष्ये ॥ इति संकल्प्य तदंगत्वेन गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं-
नांदीश्राद्धं च कृत्वा पूर्वोक्तवास्तुपीठदेवतास्थापनार्चनहोमबलिदानचित्रसूत्रागृहवेष्टनाभिषेचनब्राह्मणभोजनसंकल्पांतं कृत्वा आश्वलायनगृह्यो-
क्तां वास्तुशांतिं कुर्यात् ॥ शुचिदेशे चतस्रः शिलाः संस्थाप्य तासु दर्वा निधाय तत्र मणिकसंज्ञं मृद्भांडं संस्थाप्य एतैर्मंत्रैः ॥ पृथिव्या अधि संभवेति ॥ अ-
ङ्गरो वा वदीति ॥ मेधावद्वो वरत्नया ॥ इरा सूहप्रसंसति ॥ अनिरामपबाधतामितिवा । ततो मणिके जलमासिंचेदनेन मंत्रेण । एतु राजा वरुणो-
रेवतीभिरस्मिंस्थाने तिष्ठतु मोदमानः ॥ इरो रहंतो पतभुजमाणानि वेशामाकं सहसं विशंत्विति ॥ ततस्तत्तत्पात्रं तरे आदाय तस्मिंदूर्वाशमीशा-
खाउदुंबरशाखाव्रीहियवान् फलं हिरण्यं च क्षिप्त्वा दूर्वाभिः शाखाभ्यां च सर्वं गृहं प्रागादितः प्रदक्षिणं परिव्रजन् प्रोक्षेदनेन सूक्तेन शंन इन्द्राग्नी इति
पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् गृहप्रोक्षणे वि० ॥ सकृत्सूक्तपाठः ॥ इति नारायणभट्टत्यनुरोधात् ॥ वस्तुतस्तु ॥ शंतातीयेनेति इ-
ल्लेद्यावेति वर्गपंचकैरित्यन्ये ॥ एवं सति समुच्चयेन कोपि विरोधः तद्यथा ॥ इल्लेद्यावेति पंचविंशर्चस्य सूक्तस्य प्रभुत आश्वीनमाद्यौ पादौ लिंगोक्त-
देवता जगत्यौ त्यै त्रिष्टुभो गृहप्रोक्षणे वि० ॥ इल्लेद्यावापृथिवी० ॥ वर्ग ५ ॥ अत्रापि सकृद्देवसूक्तपाठः ततः प्रागादितस्त्रिरविच्छिन्नामुद-
कधारां दद्यादनेनापो हि ष्ठेति तृचेन आपो हि ष्ठेति तृचस्याम्बरीषः सिंधुद्वीप आपो गायत्री ॥ गृहस्य समंताद्धारायां विनियोगः ॥ आपो हि ष्ठा मयो भु० ३
अत्रापि सकृदेवमंत्रपाठः ॥ ततो वास्तुपीठान्नैर्ऋत्यपश्चिमायां वा कुंडे स्थंडिले वा गृह्याग्निं वरदनामकं संस्थाप्य चत्वारि शृंगेति ध्यात्वास्मिन्वास्तो-

ष्पतिस्थालीपाकेऽन्वाधानं करि० ॥ अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा प्रधानं वास्तोष्पतिं चतुर्वारं चरुणा शेषेण स्विष्टकृत-
मित्यादि सद्यो यक्ष्ये इत्यन्तमुक्त्वान्वाधाय इध्माबर्हिषी मन्त्रह्य परिसमूहनादि पूर्णपात्रनिधानान्तं कृत्वा वास्तोष्पतये चतुः कृत्वा तूष्णीं निरुप्य तत्संख्यया-
तथैव प्रोक्ष्य अवघाताद्याज्यभागान्तं कृत्वावदानधर्मेण चरुमवदाय वास्तोष्पत इति चतसृणां वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् ॥ अन्त्या गायत्री वास्तोष्पतिप्र-
धानचरुहोमे विनियोगः ॥ ॐ वास्तोष्पते० दे स्वाहा ॥ अत्रऋगन्ते स्वाहाकारं पठन् जुहुयात् ॥ न स्वाहाकारान्ते होमः गृह्ये तु प्रत्यृचं हुत्वेत्युक्ते
एवं सर्वत्र वास्तोष्पतय इदं न मम ॥ १ ॥ पुनः चरुमवदाय ॐ वास्तोष्पते प्रति० वास्तोष्पतय इदं ॥ २ ॥ वास्तोष्पते शग्म० वास्तोष्पतय इ ॥ ३ ॥
ॐ अमीवहा वास्तो० वास्तोष्पतय इ० ॥ ४ ॥ सर्वत्र त्यागः ॥ ततः स्विष्टकृदादिहोमशेषं समाप्य शिष्टेन चरुणान्येन स्वाद्व्यंजनपायसादियुतेन श्र-
तं तदर्धं वा शक्त्या वा भोजयेत् ॥ होमात्पूर्वमन्यः पाको न कार्यः ॥ ततः शिवं वास्तु शिवं वास्तु शिवं वास्त्विति विप्रत्युक्तः सुहृद्युतो भुंजीतेति ॥ वि-
शीर्णगृहसज्जीकरणेपीष्यते वास्तोष्पतिस्थालीपाकः साधारणशांतिवत् ॥ ॥ एत्याश्वलायनगृह्योक्तवास्तुशांतिः ॥ ॥ अथ गृहदानप्रयोगः
॥ यजमानः कृतनित्यक्रियः पुण्यकाले गृहमध्ये दक्षिणभागे चंदनेनाष्टदलं पद्मं विलिख्य तदुपरि प्रस्थमात्रं तिलान्निक्षिप्य तदुपरि शय्यां सोपस्करां-
स्थापयित्वा शय्योपरि सौवर्णमयीं लक्ष्मीनारायणप्रतिमां अग्न्युत्तारणपूर्वकं पंचामृतादिनाभिषिच्य संपूज्य प्रतिगृहीतारं च सपत्नीकं दत्वा तं करे
गृहीत्वा मंगलतूर्यघोषेण वक्ष्यमाणमंत्रैर्गृहं प्रवेशयेत् ॥ ॥ ते च मन्त्राः ॥ ॥ एह्येहि नारायण दिव्यरूप सर्वामरैर्वंदितपादपद्म ॥ शुभा-

शुभानंदशुचामधीशलक्ष्मीयुतस्त्वंचगृहंगृहाण ॥ नमःकौस्तुभनाथायहिरण्यकवचायच ॥ क्षीरोदार्णवसुप्तायजगद्धात्रेनमोस्तुते ॥ नमोहि-
रण्यगर्भायविश्वगर्भायवैनमः ॥ चराचरस्यजगतोगृहभूतायवैनमः ॥ भूर्लोकप्रमुखालोकास्तवदेहेव्यवस्थिताः ॥ नंदंतियावत्कल्पांतंतथा-
स्मिन्भवनेगृही ॥ त्वत्प्रसादेनदेवेशपुत्रपौत्राष्टतोगृहे ॥ पंचयज्ञक्रियायुक्तोवसेदाचन्द्रतारकमितिततस्तंपूर्वस्थापितशय्यायामुदङ्मुखमुप-
वेश्यसपत्नीकंयथाविभवंवस्त्रालङ्कारादिभिःसंपूज्यस्वयमासनेप्राङ्मुखोदर्भेष्वासीनोदर्भाधारयमाणःपत्न्यासहप्राणानायम्यदेशकालौसंकीर्त्यमम
मसमस्तपापक्षयपूर्वककल्पकोटिशतावधिब्रह्मलोकमहीयमानकामःशिलाकाष्टपक्वेष्टिकादिनिर्मितयथोपपत्तिसम्पादितताम्रादिभाजनसर्वधा-
न्यलवणघृततैलगुडशर्करागोमहिषीबलीवर्ददासदासीमंचकतूलिकाद्वयवितानादर्शतांबूलायतनैलालवंगादिवर्षपर्याप्तसर्वोपकरणान्वितंसदी-
पिकांप्रद्योतितंविश्वकर्मदैवतंशुक्रदैवतंवेदंगृहंगोत्रायशर्मणेऽमुकशाखाध्यायिनेसपत्नीकायसालंकृतायसुपूजितायलक्ष्मीनारायणप्रतिमासहि-
तंतुभ्यमहंसंप्रददेनममेतिदत्वापठेतुमन्त्रौ ॥ इदंगृहंगृहाणत्वंसर्वोपस्करसंयुतम् ॥ तवविप्रप्रसादेनममसंतुमनोरथाः ॥ गृहममविभू-
त्यर्थंगृहाणत्वंद्विजोत्तम ॥ प्रीयतांमेजगद्योनिर्वास्तुरूपीजनार्दनः ॥ ॥ ततःप्रतिगृहीतागृहमध्यस्तम्भम्बहिर्द्वारदेहलींवासंस्पृश्यदेवस्य-
त्वेतियजुषाप्रतिगृह्यस्वस्तीत्युक्त्वायथाशाखंकामस्तुतिंपठेत् ॥ ततःसुवर्णसहस्रमारभ्यएकसुवर्णपर्यंतंयथाशक्त्यावित्तशाठ्यविवर्जितांदक्षि-
णांदद्यात् ॥ ततःपादुकोपानहछत्रचामरादिकंदत्वासंपन्नंगृहोपस्करादीत्युक्त्वासर्वंसुसंपन्नंसंपूर्णमेवास्त्वितिप्रतिवचनंदद्यात् ॥ ततोब्राह्म-

णान्संपूज्यभूयसींदक्षिणांदत्वाशिषोगृह्णीयात् ।। प्रमादात्कुर्व० ।। यस्यस्मृत्येतिकर्मेश्वरार्पणंकुर्यात् ।। ।। गृहदानफलमुक्तंमात्स्ये ।।
।। यएवंसर्वसंपन्नम्पक्षेष्टंविनिवेदयेत् ।। कल्पकोटिशतंयावद्ब्रह्मलोकेमहीयते ।। शैलजंदारुजंवापीयोदद्यात्विधिपूर्वकम् ।। वसेत्क्षीरा-
र्णवेरम्येनारायणसमीपतः ।। मृन्मयंवापियोदद्याद्गृहंसोपस्कारान्वितम् ।। परेषुलोकपालानांप्रतिमन्वन्तरंवसेदिति ।। अत्रप्रविश्यसंस्पृश्य
वाप्रतिगृह्णीयादित्युक्तेः ।। प्रविश्यगृहद्वारदेहलींप्रविश्यदेहल्यांप्रतिगृहःकर्तव्यः ।। तथैवसंस्पृश्यस्थूणांद्वारदेहलींवासंस्पृश्यप्रतिगृह्णीयादि-
तिसांप्रदायिकाः ।। ।। इतिगृहदानप्रयोगः ।। ।। अथमठदानंस्कान्दे ।। ।। कृत्वामठंप्रयत्नेनशयनाशनसंयुतम् ।। वैदिकान्ब्राह्मणादि ।। पु-
ण्यकालेद्विजेभ्योथयतिभ्योवानिवेदयेत् ।। सर्वान्कामानवाप्नोतिनिष्कामोमोक्षमाप्नुयादिति ।। ।। इतिमठदानम् ।। ।। अथधर्मशालादानम्
मार्कण्डेयपुराणे ।। ।। कुर्यात्प्रतिश्रयगृहंपथिकानांहितावहम् ।। निजगेहैकदेशम्वासाधूनांयोनिवेदयेत् ।। प्रतिश्रयोधर्मशाला ।। तथा ।।
अक्षयंपुण्यमुद्दिष्टंतस्यस्वर्गापवर्गदम् ।। सर्वकामसमृद्धोसौदेववद्दिविमोदते ।। ।। भविष्ये ।। ।। प्रतिश्रयेसुविस्तीर्णेकारितेसजलेन्धने
दीनानाथजलार्थायवदकिन्नक्षतम्भवेदिति ।। ।। इतिधर्मशालादानम् ।। अथकन्यादानंहेमाद्रौ ।। ।। सहस्रमेवधेनूनांशतंवानडुहांसमम् ।।
दशानडुत्समंयानंदशयानसमोहयः ।। दशवाजिसमाकन्याभूमिदानंचतत्समम् ।। तस्मात्सर्वेषुदानेषुकन्यादानविशिष्यतइति ।। अग्निपु-
राणे ।। ।। श्रुत्वाकन्याप्रदानंचपितरश्चपितामहाः ।। विमुक्ताःसर्वपापेभ्योब्रह्मलोकंव्रजंतितेइति ।। देवलः ।। तिस्रःकन्यायथान्यायंपा-

लयित्वा निवेद्यच ।। नपितानरकंयातिनारीवाप्यप्रस्थयिनीति ।। वसिष्ठः ।। हाटकंक्षितिगौरीणांसप्तजन्मानुगंफलम् ।। धर्मेणविधिना-
दातममगोत्रेणायुज्यतइति ।। ऋष्यशृंगः ।। वरगोत्रंसमुच्चार्यप्रपितामहपूर्वकं ।। नामसंकीर्तयेद्विद्वान्कन्यायाश्चैवमेवहि ।। तिष्ठेदुदङ्मु-
खोदातातिष्ठेत्पूर्वमुखोवरः ।। मधुपर्कार्चितायैनांतस्मैदद्यात्सदक्षिणाम् ।। उदपाचतदादायमंत्रेणानेनदापयेदिति ।। तिष्ठेदितिअनुपवि-
ष्टइत्यर्थः ।। गौरींकन्यामिमामित्यादिपुत्रपौत्रप्रवर्धिनीमित्यंतंप्रयोगेवक्ष्यामः ।। भूमिंगावस्तदासींचवासांसिचस्वशक्तितः ।। महिषीर्वाजिन-
श्चैवदद्यात्स्वर्णमणीनपीति ।। ततःस्वगृह्यविधिनाहोमाद्यंकर्मकारयेत् ।। यथाचारंविधेयानिमांगल्यकृतकानिचेति ।। ।। अथकन्यादा-
नप्रयोगः ।। ।। तत्रादौयथाशाखंसमधुपर्केणसंपूज्यवरंप्राङ्मुखंवधूंप्रत्यङ्मुखींउपवेश्यपित्रादिकःवधूवरदक्षिणतःस्वदक्षिणस्थपत्नीसहितःउ
दङ्मुखोदर्भेष्वासीनोदर्भान्धारयमाणोदेशकालौसंकीर्त्यममसमस्तपितृणांनिरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये
अनेनवरेणास्यांकन्यायामुत्पादयिष्यमाणसंतत्याद्वादशावरान्द्वादशपरांपुरुषान्पवित्रीकर्तुंआत्मनश्चश्रीलक्ष्मीनारायणप्रीतयेब्राह्मविवाहविधि
नाकन्यादानमहंकरिष्ये इतिसंकल्पाक्षतजलेनसंकल्पंसपत्नीकउत्थायोदङ्मुखएवकन्यांसंप्रगृह्यपठेत् ।। कन्यांकनकसम्पन्नांकनकाभरणैर्युताम्
दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ।। विश्वंभरःसर्वभूताःसाक्षिण्यःसर्वदेवताः ।। इमांकन्यांप्रदास्यामिपितृणांतारणायच ।। ।। इ-
तिमंत्रौपठित्वास्वदक्षिणस्थभार्यादत्तपूर्वकल्पितजलधारामवच्छिन्नांनवकांस्यपात्रोपरिधृतकन्यांजल्युपरिस्थवारांजलिदक्षिणहस्तेक्षिपन्वदेत् ।

कन्यातारयतु पुण्यंवर्धतां ॥ शिवा आपःसंतु सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ यच्छ्रेयस्तदस्तु ॥ य-
त्पापंतत्प्रतिहतमस्तु । पुण्याहंभवंतोब्रुवंतु । स्वस्तिभवंतोब्रुवंतु । ऋद्धिंभवंतोब्रुवंतु । श्रीरस्त्वितिभवंतोब्रुवंतु । अस्तुश्रीरितिप्रतिवचनंसर्वत्र
ज्ञेयम् । अमुकामुकप्रवरोपेतामुकगोत्रोत्पन्नोमुकशर्माहंममसमस्तपितॄणामित्यादि । श्रीलक्ष्मीनारायणप्रीतयेइत्यंतपूर्वोक्तमुक्त्वाअमुकप्रव-
रोपेतायामुकगोत्रायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवरायश्रीधररूपिणेकन्यार्थिनेअमुकामुकप्रवरोपेताममुकगोत्राममुकप्रपौ-
त्रीममुकपौत्रीममुकस्यममपुत्रीममुकदेवीनाम्नींकन्यांश्रीरूपिणींवरार्थिनींयथाशक्त्यलंकृतांप्रजापतिदैवत्यांधर्मप्रजासहत्वकर्मभ्यस्तुभ्यमहंसंप्र-
ददे कन्यांप्रतिगृह्णातुभवानितिवरहस्ते सकुशाक्षतजलंक्षिपेत् ॥ प्रजापतिःप्रीयतामितिमनसास्मरेत् नममेतिनवदेदितिकेचित् ॥ ततोदाता ॥
गौरींकन्यामिमांविप्रयथाशक्तिविभूषिताम् ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः ॥ कन्येमेपृष्ठ-
तोभूयास्त्वद्दानान्मोक्षमाप्नुयात् ॥ ममवंशकुलेजातापालितावत्सराष्टकम् ॥ तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्द्धिनी ॥ धर्मेच ॥ अर्थेच ॥
कामेच ॥ नातिचरितव्यात्वयेयम् ॥ नातिचरामीतिवरः ॥ एवंममस्त्वित्यादिनातिचरामीत्यंतंकन्यादानंत्रिवारंकार्यमितिशौनकः । ततोवरःदेव-
स्यत्वाभ्यांप्रतिगृह्णामि ॥ ओंस्वस्तीत्युक्त्वा कन्यायादक्षिणांसमभिमृश्य कइदंकस्माअदादिति यथाशाखंकामस्तुतिंपठित्वा पृथ्वीप्रतिगृह्णा-
त्विति जपित्वा गृहस्थाश्रमांतर्गतश्रौतस्मार्तकर्मानुष्ठानसिद्धयेधर्मप्रजासहत्वसिध्यर्थंचकन्यांप्रतिगृह्णामीतिवदेत् ॥ ततोदाता देशकालौसंकीर्त्य-

कृतस्यकन्यादानकर्मणः सांगतासिध्यर्थंइदंसुवर्णंअग्निदैवतंदक्षिणात्वेनतुभ्यमहंसंप्रददेनममेतिवरहस्तेदद्यात् ॥ ॐस्वस्तीतिवरः ॥ ततोदा-
ताएवमेवजलपात्रभाजनभोजनानिगोमहिष्यश्वगजदासीदासभूवाहनालङ्कारादियथाविभवंसंकल्पप्रदद्यात् ॥ ततोब्राह्मणभोजनंसंकल्पप्रभू-
यसींचदद्यात् ॥ कर्मेश्वरार्पणंकुर्यादन्यदपियथाचारंकार्यं ॥ ॥ विस्तरस्तुप्रयोगरत्नादौज्ञेयः ॥ ॥ कन्यागृहेभोजननिषेधोमदनरत्नेव-
ह्निपुराणे । ॥ अप्रजायांतुकन्यायांनभुंजीतकदाचन ॥ दौहित्रस्यमुखंदृष्ट्वाकिमर्थमनशोचतीतिकन्यादानप्रयोगः ॥ ॥ अथकपिला-
दानम् ॥ ॥ साचदशधोक्तावाराहे ॥ सुवर्णकपिलापूर्वाद्वितीयागौरपिंगला ॥ तृतीयाचैवरक्ताक्षीचतुर्थीगुडपिंगला ॥ पंचमीबहुवर्णास्या
त्षष्ठीचश्वेतपिंगला ॥ सप्तमीश्वेतपिंगाक्षीअष्टमीकृष्णपिंगला ॥ नवमीपाटलाप्रोक्तादशमीपुच्छपिंगला ॥ एतादशविधाख्याताःकपिलास्ते
महामुने ॥ सर्वाह्येतामहाभागास्तारयंतिनसंशयइति ॥ ॥ आदित्यपुराणे ॥ ॥ सहस्रंयोगवांदद्यात्कपिलात्वेकएवहि ॥ सममेवपुरा
प्राहब्रह्माब्रह्मविदांवरइति ॥ तथा ॥ रौप्यशृंगीरौप्यखुराःसवत्सायाभवंतिहि ॥ सुरभीलोकमासाद्यरमतेतावतीःसमाइति ॥ ॥ महा-
भारते ॥ ॥ समानवत्सांकपिलांधेनुंदद्यात्पयस्विनीं ॥ सुश्वेतवस्त्रसंवीतांब्रह्मलोकेमहीयतइति ॥ ॥ अथकपिलादानप्रयोगः ॥ ॥
पुण्यकालेकृतनित्यक्रियोधेत्यादि ॥ ममगोसहस्रदानफलावाप्तिसवत्सकपिलायाःरोमपरिमितवत्सरपर्यंतकामधेनुलोकनिवासकामइमांकपिलां
सुवर्णशृंगींरौप्यखुरांताम्रपृष्ठींकांस्योपदोहांघंटाभरणांश्वेतवस्त्रयुगच्छन्नांचंदनस्रग्विभूषितांसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेसुपूजितायब्राह्म

णायतुभ्यमहंसंप्रददे नममेतिदद्यात् ॥ ॥ मंत्रस्तुमात्स्ये ॥ ॥ कपिलासर्वदेवानांपूजनीयासिरोहिणी ॥ तीर्थदेवमयीयस्मात्ततःशांतिं
प्रयच्छमे ॥ ॥ इतिमंत्रांतेप्रदक्षिणांकुर्यात् ॥ ॥ ततःसुवर्णदक्षिणांदद्यात् ॥ ॥ उक्तोपस्करकपिलादानफलमात्स्ये ॥ ॥ वस्त्रंच-
तद्गुणंदत्वादक्षिणांचचतुर्गुणां ॥ ॥ एतैरलंकृतांधेनुंघंटाभरणभूषिताम् ॥ ॥ कपिलांविप्रमुख्यायदत्वामोक्षमवाप्नुयादिति ॥ ॥ तथा
द्विगुणोपस्करोपेतामहतीकपिलास्मृता ॥ उपस्कराःसुवर्णशृंगवस्त्रदोहनपात्राद्याःसामान्यगोदानेवक्ष्यमाणाः ॥ दत्तासाविप्रमुख्यायस्वर्गमो
क्षफलप्रदा ॥ सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ यान्यानर्थयतेकामांस्तांस्तान्प्राप्नोतिमानवइति ॥ ॥ महाकपिलादानप्रयोगः
अद्येत्यादिममसप्तजन्मकृतपापनाशपूर्वकम्पुत्रपौत्रादिसहितायशर्मणेसालंकृतांइमांमहाकपिलांद्विगुणोपस्करोपेतांरुद्रदैवत्यांतुभ्यमहंसंप्रददे
नममेतिदद्यात् ॥ ततःसुवर्णदक्षिणांदत्वाक्षमापयेत् ॥ मंत्रस्तुपूर्वमेवोक्तः ॥ ॥ इतिमहाकपिलादानप्रयोगः ॥ ॥ इतिमहादशदाना-
नि ॥ ॥ अथदशधेनुदानानि ॥ ॥ यास्तुपापविनाशिन्यःकथितादशधेनवः ॥ तासांस्वरूपंवक्ष्यामिनामानिचनराधिप ॥ प्रथमागुडधेनुः-
स्याद्घृतधेनुस्तथापरा तिलधेनुस्तृतीयातुचतुर्थीजलधेनुका ॥ क्षीरधेनुस्तुविख्यातामधुधेनुस्तथापरा ॥ सप्तमीशर्कराधेनुर्दधिधेनुस्तथाष्टमी
रसधेनुस्तुनवमीदशमीस्यात्स्वरूपतः ॥ कुम्भान्स्युर्द्रवधेनूनामितरासांतुराशयः ॥ सुवर्णधेनुमप्यत्रकेचिदिच्छंतिमानवाः ॥ नवनीतेनतैः-
लेनतथान्येपिमहर्षयः । रसधेनुस्थानेसुवर्णधेनुंजलधेनुवत्पूजयेत् ॥ ॥ एतद्विधानमपिमात्स्ये ॥ ॥ अजिनंतुचतुर्हस्तंप्राग्ग्रीवंविन्यसेद्भुवि ॥

गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः ।। तत्रैणं वाजिनं तद्वद्वत्सस्य परिकल्पयेत् ।। ।। लघुकृष्णाजिनम् ।। ।। प्राङ्मुखीं कल्पयेद्धेनुमुद-
क्पादां सवत्सकाम् ।। प्राङ्मुखीं प्राक्शिरसम् ।। सवत्सां उत्तरभागस्थितवत्ससहिताम् ।। उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टया ।। वत्सं भा-
रेण कुर्वीत भाराभ्यां मध्यमा स्मृता ।। अर्धभारेण वत्सः स्यात्कनिष्ठा भारकेण तु ।। चतुर्थांशेन वत्सः स्याद्गृहवित्तानुसारतः ।। तुलां पलशतं प्राहुर्भारः
स्याद्विंशतिस्तुलाः इति भारः पलसहस्रात्मको भवतीत्युक्तं परिभाषायाम् ।। धेनुवत्सौ घृतस्यैतौ सितसूक्ष्माम्बरावृतौ ।। शुक्तिकर्णाविक्षुपादौ शुचिमु-
क्ताफलेक्षणौ ।। सितसूत्रशिरालौ तौ सितकम्बलकम्बलौ ।। ताम्रगुडकपृष्ठौ तौ सितचामररोमकौ ।। ककुत्प्रदेशो गुडकः ।। विद्रुमभ्रूयुगोपेतौ
नवनीतस्तनान्वितौ ।। क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ।। सुवर्णशृङ्गाभरणौ राजतक्षुरसंयुतौ ।। नानाफलमयैर्दन्तैर्घ्राणगन्धकर-
ण्डकौ ।। गन्धकरण्डकः कर्पूरादिपात्रविशेषः ।। एवं रचयित्वा धूपदीपादिभिरभ्यर्चयेद्वस्त्रमुक्तादीनि भारतो मानाधिक्ये फलाधिक्यम् ।। ।। अ-
थास्य प्रयोगः ।। ।। यजमानः कृतनित्यक्रियः पुण्यकाले शुचिरद्येत्यादि मम समस्तपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गुडधेन्वादिदानं करिष्ये इति-
संकल्प्य विप्रं वस्त्राभरणादिभिः संपूज्य प्रदक्षिणीकृत्य सर्वपापक्षयकाम इमाममुकधेनुं गोत्राय शर्मणे ब्राह्मणाय स्वपूजिताय तुभ्यमहं संप्रददे न ममे-
ति तद्धस्ते सकुशतिलजलं गोपुच्छं दद्यात् ।। विप्रस्तु देवस्य त्वेति प्रतिगृह्य स्वस्तीत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् ।। ।। ततः सुवर्णदक्षिणां दद्या-
त् ।। प्रार्थनामन्त्रास्तु ।। या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता ।। धेनुरूपेण सा देवी वाञ्छितं मे प्रयच्छतु ।। देहस्था या च रुद्राणी शंकरस्य सदा-

प्रिया ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहायाचविभावसोः ॥ चन्द्रार्कशक्रशक्तिर्याधेनुरूपास्तुसाश्रिये ॥
चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीर्धनदस्यच ॥ यालक्ष्मीर्लोकपालानांसाधेनुर्वरदास्तुमे ॥ स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांतथा ॥ सर्वपा-
पहराधेनुस्तस्माच्छांतिंप्रयच्छमेइति ॥ एवमामंत्र्यब्राह्मणायतांधेनुंनिवेदयेत् ॥ एतदेवविधानंसर्वधेनूनाम् ॥ प्रत्यक्षधेनुव्यतिरिक्तानामित्य-
र्थः ॥ उक्तारचनायास्तत्रानुपयोगात् ॥ ततोभूयसींदत्वाब्राह्मणान्भोजयेदिति ॥ ॥ एतदेवविधानंस्यात्तएवोपस्कराःस्मृताः ॥ अयनेवि-
षुवेपुण्येव्यतीपातेतथापुनः ॥ गुडधेन्वादयःसर्वाउपरागादिपर्वसु ॥ यथाशक्तिप्रदातव्याभुक्तिमुक्तिफलप्रदाइति ॥ अत्रद्रोणपरिमाणाति-
लधेनुरुक्ताकल्पतरौ ॥ तत्प्रकारंतुविष्णुधर्मोत्तरे ॥ अनुलिप्तेमहीपृष्ठेवस्त्राजिनकुशास्तृते ॥ धेनुंतिलमयींकृत्वासर्वरत्नैरलंकृताम् ॥ धे-
नुंद्रोणेनकुर्वीतआढकेनतुवत्सकम् ॥ स्वर्णशृंगींरौप्यखुरांगंधघ्राणवतींतथा ॥ कुर्याच्चशर्कराजिह्वांगुडास्यामाविकंबलाम् ॥ इक्षुपादांता-
म्रपृष्ठींशुचिमुक्ताफलेक्षणाम् ॥ प्रशस्तपत्रश्रवणांफलदंतमयींशुभाम् ॥ स्रग्दामपुच्छांकुर्वीतनवनीतस्तनान्विताम् ॥ सितवस्त्रयुगच्छन्नां-
घंटाभरणभूषिताम् ॥ ईदृक्संस्थानसंपन्नांकृत्वाश्रद्धासमन्वितः ॥ कांस्योपदोहनांदद्यात्केशवःप्रीयतामिति ॥ ॥ इतिकर्तव्यता ॥
मंत्रास्तुगुडधेनूक्ताएव ॥ प्रार्थनामंत्रास्तु ॥ वन्हिपुराणे ॥ तिलाश्चपितृदैवत्यानिर्मिताश्चेहगोसवे ॥ ब्रह्मणातन्मयीधेनुर्दत्ताप्रीणातु-
केशवइति ॥ मंत्रांतरमुक्तम् ॥ प्रतिमातिलधेन्वादीनांविक्रयायुक्तंहेमाद्रौब्रह्मवैवर्ते ॥ दानकालेतुदेवत्वंप्रतिमानांप्रकीर्तितम् ॥ धेन

नामपिधेनुत्वं श्रुत्युक्तं दानयोगतः ॥ दातुर्वै दानकाले तु धेनवः परिकीर्तिताः ॥ विप्रस्वत्वक्षयकाले तद्द्रव्यन्तदिति निश्चयः ॥ दानसंबंधि विप्रेणाद्रव्य-
मागच्छतागृहं ॥ तत्सर्वं विदुषा तेन विक्रेयं स्वेच्छया विभो ॥ कुटुंबभरणं कार्यं धर्मकार्यं च सर्वधा ॥ अन्यथा नरकं यातीत्येवमाह पितामह इति ॥ इ-
तितिलधेनुदानम् ॥ अथ घृतधेनुदानं विष्णुधर्मोत्तरे ॥ ॥ तिलाभावे तथा दद्यात् घृतधेनुं प्रयत्नतः ॥ वासुदेवं जगन्नाथं घृतक्षीराभिषो जि-
तम् ॥ संपूज्य पूर्ववत् पुष्पैर्धूपदीपादिभिर्नरैः ॥ ॥ तत्रैव विधानमाह ॥ ॥ गव्यस्य सर्पिषः कुंभं पुष्पमालादिभूषितम् ॥ कांस्यापिधानसं-
युक्तं सितवस्त्रयुगेन च ॥ हिरण्यसहितं तद्वन्मणिविद्रुममौक्तिकैः ॥ ॥ अत्र पलसहस्रपरिमाणं कुंभः । ॥ द्वादशपलाधिकपंचशतपलाधिको-
वा ।। इक्षुयष्टिमयान्पादान् खुरान् रौप्यमयांस्तथा ॥ सौवर्णे चाक्षिणी कुर्याच्छृंगे चागरुकाष्ठजे ॥ सप्तधान्यमये पार्श्वे पत्त्रोर्णेन वकम्बले ॥ प-
त्तोर्णं धौतकौशेयम् ॥ कर्पूरघ्राणम् ॥ फलमयान् स्तनान् ॥ शर्करायाजिह्वा ॥ गुडक्षीरमयं मुखम् ॥ क्षौमं पुच्छम् ॥ रोमाणि सितसर्षपै
ताम्रपृष्ठीम् ॥ एतादृशीं कृत्वा विधिना संपूज्य ॥ तथा ब्राह्मणं यथाविभवं वस्त्रालङ्कारादिभिः संपूज्य दद्यात् ॥ विधिस्तु प्राग्वत् । मन्त्रस्तु स्कांदे ॥
घृतङ्गावः प्रसूयन्ते घृतं भव्यं प्रतिष्ठितम् । घृतमग्निश्च देवाश्च घृतं मे संप्रदीयतामिति ॥ दानफलमपि तत्रैव ॥ घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
तेषु लोकेषु सर्वेषु सुपुण्येषु प्रजायते ॥ सकामानामियं व्युष्टिः कथिता नृपसत्तम ॥ व्युष्टिः फलम् ॥ विष्णुलोकं नरा यांति निष्कामा धेनुदानत इति
दक्षिणा तु हिरण्यमेव हेमाद्रिः ॥ सुवर्णप्रभृति शक्त्या वित्तयुक्तं मदनरत्ने ॥ ॥ इति घृतधेनुदानम् ॥ ॥ अथ जलधेनुदानम् ॥ स्कांदे ॥

जलकुंभंनरव्याघ्रसुवर्णरजतान्वितम् ॥ सुवर्णशृङ्गरजतखुरान्वितमिति ॥ रत्नगर्भमशेषैस्तुग्राम्यैर्धान्यैःसमन्वितम् ॥ सितवस्त्रयुगच्छन्नां
दूर्वापल्लवशोभिताम् । कुष्टमांसीमुरोशीरवालकामलकैर्युताम् ॥ प्रियंगुपत्रसहितंसितवस्त्रोपवीतिनम् ॥ सच्छत्रंसदुपानत्कंदर्भविष्टरसं-
स्थितम् ॥ चतुर्भिःसंभृतेभूपतिलपात्रैश्चतुर्दिशम् ॥ स्थगितंदधिपात्रेणघृतक्षीरवतामुखे ॥ ॥ तिलपात्राणिताम्रमयानि ॥ ॥ दधि-
पात्रंकांस्यमयम् ॥ उपोषितोवासुदेवंजलेशयमभ्यर्च्यसङ्कल्प्यजलधेनुंविप्रंचवस्त्रादिभिःसंपूज्यसवत्सांजलधेनुंगुडधेनुंचदद्यात् ॥ ततोयालक्ष्मी
रित्यादिपूर्वोक्तमंत्रैःप्रार्थयेत् ॥ ॥ इतिजलधेनुदानम् ॥ अथक्षीरधेनुदानम् ॥ ॥ स्कांदे ॥ क्षीरधेनुंप्रवक्ष्यामितांनिबोधनराधिप ।
अनुलिप्तेमहीपृष्ठेगोमयेननराधिप ॥ गोचर्ममानमात्रेणकुशानास्तीर्यसर्वतः ॥ तस्योपरिमहाराजन्यसेत्कृष्णाजिनंततः ॥ तत्रगोमयेन-
कुण्डलिकांकृत्वाक्षीरकुंभंतत्रस्थाप्यचतुर्थांशेनवत्सकम् ॥ शृङ्गाणिचंदनागरुकाणि ॥ प्रशस्तपत्रश्रवणातिलपात्रोपरिन्यस्ताम् ॥ मुखंगु-
डमयंहेमवान् ॥ जिह्वाशर्करयाफलैर्दंताः ॥ मुक्ताफलेक्षणा ॥ इक्षुपादा ॥ दर्भरोमासितकम्बलकम्बला ॥ एतादृशींसवत्सामभ्यर्च्यद्वि-
जंचवस्त्रालङ्कारादिभिःसंपूज्यअद्येत्यादिगोत्रायशर्मणेसालंकृतायइमांक्षीरधेनुंपूर्वोक्तसोपस्करयुतांसमस्तपापक्षयकामस्तुभ्यमहंसंप्रददेनममे-
तिवदेत् ॥ देवस्यत्वास्वस्तीत्युक्त्वायथाशाखङ्गमस्तुतिम्पठेत् । ततोयालक्ष्मीरित्यादिमंत्रैःप्रार्थयेत् ॥ ॥ इतिक्षीरधेनुदानम् ॥ ॥ अथ
मधुधेनुदानम् स्कांदे ॥ मधुधेनुंप्रवक्ष्यामिसर्वपापप्रणाशिनीम् ॥ अनुलिप्तेमहीपृष्ठेकृष्णाजिनकुशोत्तरे ॥ कल्पयेत् ॥ धेनुंद्विजंचपू-

र्ववदभ्यर्च्य अद्येत्यादिगोत्रायशर्मणेसालंकृतायसौवर्णमुखींअगरुचंदनशृङ्गींताम्रपृष्ठींसूत्रपुच्छांइक्षुपादांसितकंबलकंबलांगुडमुखींशर्कराजि-
ह्वांमौक्तिकनेत्रांफलदन्तांदर्भरोमांप्रशस्तपत्रश्रवणांनवनीतस्तनींसप्तधान्योपेतांततश्चत्वारिपात्राणिचतुर्दिक्षुविन्यसेत्। वस्त्रयुग्मेनाच्छाद्यघंटाभ-
रणभूषितांकांस्यदोहांसुपूजितांपुच्छदेशोपविष्टायमधुवाताऋतायतइतिमन्त्रमुक्त्वाइमांमधुधेनुंसर्वपापक्षयकामस्तुभ्यमहंसंप्रददेनममेति ॥
ततःसुवर्णदक्षिणांदत्वा ॥ यालक्ष्मीरित्यादिपूर्वोक्तमंत्रैःप्रार्थयेत् ॥ ॥ इतिमधुधेनुदानम् ॥ अथशर्कराधेनुदानम् ॥ स्कांदे ॥ तद्व-
च्छर्कराधेनुंशृणुराजन्यथार्थतः ॥ अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥ भारचतुष्टयपरिमितांतच्चतुर्थांशोवत्सः ॥ भारद्वये अष्टमांश
इति ॥ स्वशक्त्यावाकार्या ॥ सर्वधान्यानिचतुर्दिक्षुसंस्थाप्यअद्येत्यादिगोत्रायशर्मणेसालंकृतायइमांशर्कराधेनुंसुवर्णशृङ्गींमौक्तिकनयनांगुड-
मुखींपिष्टमयीजिह्वांकंबलपट्टसूत्रेणवेष्टितांकंठाभरणभूषितांइक्षुपादांरौप्यखुरींनवनीतस्तनींप्रशस्तपर्णश्रवणांसितचामरभूषितांपंचरत्नसमा-
युक्तांदर्भरोमांकांस्यदोहनांगन्धपुष्पाद्यर्चितांसमस्तपापक्षयकामस्तुभ्यमहंसंप्रददेनममेतिसुवर्णदक्षिणांदद्यात् ॥ ततोयालक्ष्मीरित्यादिमंत्रैःसं-
प्रार्थ्यभूयसींदद्यात् ॥ विप्रमुखंनेक्षेदिति ॥ पंचरत्नानित्वपरार्के ॥ कनकंहीरकंनीलंपद्मरागंचमौक्तिकम् ॥ पंचरत्नमिदंप्रोक्तमृषिभिःपूर्वद-
र्शिभिरिति ॥ इतिशर्कराधेनुदानम् ॥ अथदधिधेनुदानम् स्कांदे ॥ तत्रभूलेपनेकुशकृष्णाजिनेआस्तीर्णसप्तधान्योपरिदधिकुंभंसंस्थाप्यच-
तुर्थांशेनवत्सकृत्वागत्रायशर्मणेसालंकृतायसौवर्णमुखींप्रशस्तपत्रश्रवणांमुक्ताफलेक्षणांचंदनागरुशृङ्गींमुखेविशेषगन्धद्रव्यैर्युक्तांशर्करयाकृतजि

क्तां श्रीखंडेनकृतघ्राणांफलमयदन्तांसितकंबलकृत्ताद्दर्भरोमांसूत्रमयपुच्छांरौप्यखुरींवानवनीतस्तनीमिक्षुपादांसर्वाभरणभूषितांवस्त्रयुग्मेन छादितांगन्धपुष्पाद्यर्चितांइमांदधिधेनुंसर्वपापक्षयकामोदधिक्रांवणइतिमन्त्रम्पठित्वातुभ्यमहंसंप्रददेनममेति ॥ गुडधेनूक्तमंत्रेणवादद्यात् ॥ ततःसुवर्णदक्षिणांदत्वायालक्ष्मीरित्यामंत्रैःप्रार्थयेत् ॥ ॥ इतिदधिधेनुदानम् ॥ ॥ अथरसधेनुदानम् ॥ स्कांदे ॥ रसधेनुंमहाराजकथयामिसमासतः ॥ अनुलिप्तेमहीपृष्ठेकृष्णाजिनकुशोत्तरे ॥ इक्षुरसस्यघटंपूरयित्वातच्चतुर्थांशेनवत्संसंपाद्य ॥ अद्येत्यादिगोत्रायशर्मणेसालंकृतायइमांरसधेनुंसुवर्णशृङ्गाभरणयुतांरौप्यखुरांवस्त्रपुच्छांइक्षुपादांपुष्पकंबलांताम्रपृष्ठींपुष्परोमांव्रीहियुतांचतुर्दिक्षुदीपमायुक्तांसर्वगंधविभूषितांपर्वादिदिक्षुतिलपात्रचतुष्टयान्वितांसुपूजितायसर्वपापक्षयपूर्वकैकविंशत्कुलोद्धारणकामस्तुभ्यमहंसंप्रददेनममेति ॥ सुवर्णदक्षिणांदद्यात् ॥ मन्त्रास्तु ॥ गुडधेनूक्ताएवशेषोपस्कराश्च ॥ एवमुच्चारयित्वातुदीयतेवैद्विजन्मने ॥ दशपूर्वान्परांश्चैवआत्मानंचैकविंशतिरिति ॥ इतिरसधेनुदानम् ॥ ॥ अथस्वरूपतोगोदानम् ॥ अङ्गिराः ॥ ॥ गौरेकस्यैवदातव्याश्रोत्रियायकुटुंबिने ॥ सातितारयतेपश्चान्सप्तसप्तचसप्तचेति ॥ देवलः ॥ सुशीलांलक्षणवतींयुवतींवत्ससंयुताम् । बहुदुग्धवतींस्निग्धांधेनुंदद्याद्द्विचक्षणे ॥ ॥ अथगोदानप्रयोगः कर्ताकृतनित्यक्रियःपुण्यकालेअद्येत्यादियथाशक्तियथाज्ञानंगोदानमहंकरिष्येइतिसङ्कल्प्यसवत्सांधेनुंद्विजंचयथाविभवंवस्त्रालङ्कारादिभिःसंपूज्यगोशृङ्गमूलादिस्नानस्थानादिषुदेवताःपूजयेत् ॥ तद्यथा ॥ शृङ्गमूलेब्रह्मविष्णुभ्यांनमः ॥ ब्रह्मविष्णुपूजया० ॥ शृङ्गाग्रेसर्वतीर्थेभ्यो

नमः सर्वतीर्थानिपूजयामि ॥ एवंसर्वंच ॥ शिरोमध्येशिवाय॰ ॥ ललाटेदेव्यैन॰ ॥ नासिकायांषण्मुखाय॰ ॥ नासापुटयोःकम्बलाश्वत-
रनागाभ्यां॰। कर्णयोरश्विभ्यां॰। चक्षुषोःशशिभास्कराभ्यां॰। दन्तेषुवायवे॰। जिह्वायांवरुणा॰। हुंकारेसरस्वत्यै॰। गण्डयोःपक्षमासाभ्यां॰
ओष्टयोःसन्ध्याद्वया॰॥ ग्रीवायांइन्द्राय॰॥ कुक्षिदेशेरक्षोभ्यो॰ ॥ उरसिसाध्येभ्यो॰ ॥ पादेषुधर्माय॰॥ जङ्घासुअधर्माय॥ खुरमध्येगन्धर्वे-
भ्यो॰ ॥ खुराग्रेपन्नगेभ्यां॰ ॥ खुरपश्चिमाग्रेअप्सरोभ्यो॰ ॥ पृष्ठेएकादशरुद्रेभ्यो॰ ॥ सर्वसन्धिषुवसुभ्यो॰ ॥ श्रोणितटेपितृभ्यो॰ ॥ लां-
गुलेसोमाय॰ ॥ गुह्येआदित्यरश्मिभ्यो॰ ॥ गोमूत्रेगङ्गायै॰ ॥ गोमयेयमुनायै॰ ॥ क्षीरेसरस्वत्यै॰। दध्निनर्मदायै॰ घृतेअग्नये॰ रोमेषुअष्टा-
विंशतिदेवकोटिभ्यो॰ उदरेपृथिव्यै॰ पयोधरेषुचतुःसमुद्रेभ्यो॰। चतुरःसमुद्रान्पूजयामि एतादेवताअङ्गेषुसम्पूज्यअद्येत्यादिगोत्रायशर्मणेसुप-
जितायपृथ्वीदानसमफलकामःसर्वपापक्षयकामोविष्णुप्रीतिकामोवाइमांप्रत्यक्षधेनुंसुवर्णशृङ्गींरौप्यखुरांताम्रपृष्टींघंटाग्रैवेयांमुक्तालांगलांकां-
स्योपदोहनींसितवस्त्रद्वयोपेतांसर्वाभरणभूषितांसोपस्कारांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेति ॥ तिलपात्रेघृताक्तांगोपुच्छंकृत्वाविप्रहस्तेसतिल-
कुशोदकंदद्यात् ॥ मन्त्रस्तु ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी । विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ ततोदातादानप्रतिष्ठासि-
ध्यर्थंसुवर्णंदक्षिणांदत्वाप्रार्थयेत् ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ पूजितासिवसिष्ठे-
नविश्वामित्रेणधीमता । सुरभिहरमेपापंयन्मयादुष्कृतंकृतमिति ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्टतः ॥ गावोमेहृदयेसंतुगवांमध्येव-

साध्यहमिति ॥ पठित्वाधेनुंद्विजंचप्रदक्षिणीकृत्यकिंचिदनुव्रजेदिति ॥ इतिगोदानप्रयोगः ॥ ॥ अथश्वेतवर्णादिगोदानफलमुक्तंस्यान्मे
श्वेतासुतप्रदाप्रोक्ताचन्द्रलोकप्रदायिनी ॥ कृष्णास्वर्गप्रदाज्ञेयागौरीस्यात्कुलवर्धिनी ॥ कपिलासर्वपापघ्नीनानावर्णाचमोक्षदेति ॥ अथस-
मानवर्णगोवत्सदानफलम् ॥ महाभारते ॥ रोहिणींतुल्यवर्णांतुसवत्सांचपयस्विनीम् ॥ प्रदत्वावस्त्रसम्वीतांसूर्यलोकेमहीयते ॥ समान-
वत्सांकृष्णान्तुधेनुं० ॥ सुव्रताम्वस्त्रसम्वीतामस्मिंल्लोकेमहीयते ॥ वातरेणुसवर्णांतुसवत्सांकांस्यदोहनीम् ॥ प्रदायवस्त्रसम्वीताम्वारुणंलोकम-
श्नुते ॥ हिरण्यवर्णांपिङ्गाक्षींसवत्सांदक्षिणायुताम् ॥ प्रदद्याद्वस्त्रसम्वीतांकौवेरंलोकमाप्नुयात् ॥ पलालधूम्रवर्णान्तुसवत्सांप्रदद्यात्प्रिह-
लोकेमहीयते ॥ सवत्सांपीवरांदत्वाशितिकण्ठमलंकृताम् ॥ विश्वेदेवसमस्वादंस्थानश्रेष्ठंप्रपद्यते ॥ समानवत्साङ्गौरींतुधेनुं० सवत्सांकां-
स्यदोहांतुवस्त्रनांल्लोकमाप्नुयात् ॥ वत्सोपपन्नांनीलांगींसर्वरत्नसमन्विताम् ॥ गन्धर्वाप्सरसांलोकांदत्वाप्राप्नोतिमानवइति ॥ सङ्कल्पेतुत-
त्फलंसङ्कीर्त्यदद्यात् ॥ इतिसमानवर्णगोवत्सदानफलम् ॥ ॥ अथकृष्णधेनुदानम् ॥ मात्स्ये ॥ ॥ अद्येत्यादिसङ्कल्पादिपूर्ववत् ॥
मन्त्रस्तु ॥ कृष्णधेनोनमस्तुभ्यंब्रह्मविष्णुशिवात्मके ॥ त्रिजन्मार्जितपापानिध्रुवंदानात्प्रनाशयेति ॥ अथहेमशृङ्गीदानम् ॥ मात्स्ये ॥
दशसौवर्णिकेशृङ्गेखुराःपंचपलान्विताः ॥ पंचाशत्पलिकंकांस्यंताम्रंचापितथैवच ॥ वस्त्रंचत्रिगुणांधेन्वादक्षिणांचचतुर्गुणेति ॥ एवम्विधि-
वद्दातुःफलमुक्तंनंदिपुराणे ॥ ॥ विधिनातुयदादत्तापात्रेधेनुःसदक्षिणा ॥ दातातारयतेजंतून्कुलानामयुतंशतमिति ॥ ॥ महाभारतेपि

प्रासादायचसौवर्णाःश्रयप्रारत्नोज्ज्वलास्तथा ॥ वराश्चाप्सरसोयत्रतत्रगच्छन्तिगोप्रदाः ॥ तथा ॥ यावन्तिरोमाणिभवन्तिधेन्वास्तावन्तिवर्षा-
णिमहीयतेसः ॥ स्वर्गाच्च्युतश्चापिततोनृलोकेकुलेसमुत्पत्स्यतिगोमतान्तथा ॥ सालंकृतांसवत्सांचधेनुंसंपूज्यभक्तितः ॥ सरत्नपर्णांपृथिवीं
तेनदत्तानसंशयइति ॥ ॥ इतिस्वरूपतोगोदानम् ॥ ॥ अथकार्पासधेनुदानम् ॥ मात्स्ये ॥ अतःपरंप्रवक्ष्यामिधेनुंकार्पासिकींभुवि ।
सर्वविघ्नस्वगुप्त्यर्थंब्रह्मणाचांशुकंकृतम् ॥ साचकार्पासभारेणश्रेष्ठाधेनुःप्रकीर्तिता ॥ मध्यमाचतदर्द्धेनतदर्द्धेनकनीयसी ॥ पूर्ववत्स्वंचधान्यं-
चहिरण्यंचतथैवच ॥ वत्सकंतुचतुर्थांशान्मानमात्राभिधीयते ॥ कुर्वीतपर्ववद्वत्सवस्त्रधान्यादुपस्कृतमिति ॥ ॥ ततःवराहोक्ततिलधेनु-
दानवत् ॥ ॥ क्रियाकलापादिमङ्गल्यादारभ्यदानान्तंकृत्वाप्रार्थयेत् ॥ मन्त्रस्तु ॥ हेमकुंदेंदुसदृशेक्षीरार्णवसमुद्भवे ॥ सोमप्रियेसुधेन्वा-
ख्येसौरभेयिनमोस्तुते ॥ दत्तेयमिद्नाथायशशाङ्कायमृतायच ॥ अत्रिनेत्रप्रजातायसोमराजायवैनमः ॥ यस्त्वेवम्परयाभक्त्याब्राह्मणा-
यप्रयच्छति ॥ सयातिचन्द्रलोकंतुसोमेनसहमोदतइति ॥ ॥ इतिकार्पासधेनुदानम् ॥ अथलवणधेनुदानम् ॥ भविष्ये युधिष्ठिरंप्रति-
कृष्णः ॥ शृणुराजन्प्रवक्ष्यामिलवणस्येहकल्पिताम् ॥ गोमयेनानुलिप्तेतुदर्भसंस्तरसंस्थितम् ॥ आविकंचर्यविन्यस्यपूर्वाशाभिमुखस्थितम् ।
वस्त्रेणाच्छादितांकृत्वाधेनुंकुर्वीतबुद्धिमान् ॥ आढकेनैवकुर्वीतबहुवित्तोपकल्पिताम् ॥ गाम्बिप्रश्चयथाविभवंवस्त्रालङ्कारादिभिःसंपूज्य ॥
अद्येत्यादिगोत्रायशर्मणेसुपूजितायइमांलवणधेनुंफलतनोंसिन्धुशुक्तिवर्णांसक्तुपिण्डकपोलायवास्यांकंवलपट्टस्त्रग्ग्रैवेयकांताम्रपृष्ठींगुडपा

नांकंवस्त्रलांगलांमधयोनिकांसर्वाभरणभूषितांसर्वपापक्षयकामोविष्णुप्रीतिकामोवातुभ्यमहंसंप्रददेनममेतिपुत्रभार्यादियुतःप्रदक्षिणीकृत्यदद्यात् ॥ शेषंमधुधेनुवत् ॥ मन्त्रस्तु ॥ लवणेवैरसाःसर्वेतिष्ठतिसर्वदेवताः ॥ सर्वदेवमयेदेविलवणाख्येनमोस्तुतेइति ।. पुराणान्तरेषुषोडशप्रस्थमितांम् ॥ चतुर्थांशेनवत्सइत्युक्तम्. ॥ इतिलवणधेनुदानम् ॥ ॥ अथसुवर्णधेनुदानम् । वन्हिपुराणे ॥ ॥ सुवर्णधेनुस्थाप्यत्रसुवर्णस्यचतुर्दश ॥ सुनिर्णिक्तसुवर्णस्यसप्तभिर्मध्यमामता ॥ चतुर्भिस्त्वकनिष्ठास्याच्चतुर्थांशेनवत्सकः ॥ गुडधेनुविधानेनदत्तासर्वफलप्रदा ॥ अत्रविशेषोरौप्येणवत्सइतिकेचित् ॥ तत्र ॥ अद्येत्यादिप्रवालशृङ्गींघृतपात्रस्तनवतींपद्मरोमांकर्पूरागरुनासिकांमिष्टान्नरसवासितांशङ्खश्रृङ्गांतरांमुक्तिललाटस्थांनारीकेलश्रवणांगुडजानुकांपंचगव्यापानवतींकांस्यपृष्ठांपट्टसूत्रलांगूलांसप्तधान्यसमायुक्तांफलपुष्पोपेतांछत्रोपानत्समन्वितांसुवर्णधेनुंरुद्रदैवत्यांसहस्राश्वमेधफलावाप्तिकामःकुलसहस्रस्यस्वर्गेनिवासकामस्सगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ सुवर्णधेनुंविप्रायप्रतिपाद्येद्यशोनरः ॥ हिरण्यरेताःपुरुषःपुराणःकृष्णपिङ्गलः ॥ तप्तहेमच्छविःस्रष्टाविश्वात्माप्रीयतांममेति ॥ अनेनैवतुमन्त्रेणधेनुदानंप्रकीर्तितम् ॥ अश्वमेधसहस्रस्यफलमाप्नोत्यसंशयम् ॥ कुलानाञ्चसहस्रस्यस्वर्गंनयतिगोप्रदइति ॥ इतिसुवर्णधेनुदानम् ॥ अथवन्ध्यात्वहरंसुवर्णधेनुदानम् ॥ वायुपुराणे ॥ चतुर्विधाचयावन्ध्याभवेद्दुःखवियोजनात् ॥ वक्ष्येतस्याःप्रतीकारंतत्स्वरूपंनिबोधमे ॥ वन्ध्याचतुर्विधाप्रोक्तावन्ध्याकाकवन्ध्यास्त्रीप्रसूः मृतप्रजाइति । काकवन्ध्यातुकाकवदेकापत्याशेषास्पष्टाएव ॥ धेनुरूपवि-

शेषमाह ॥ ॥ हेमाद्रौकर्मविपाके ॥ ॥ हिरण्येनयथाशक्त्यासवत्सांकारयेद्गाम् ॥ धेनुंपलेनवत्संचपादेनगुरुरब्रवीत् ॥ यथाशक्त्याप्रति
पलेनवातदर्धेनतदर्द्धार्द्धेनवापुनरिह ॥ कर्मविपाकोक्तपरिभाषाप्रकारेण ॥ धेनुंरौप्यखुरांरत्नपुच्छेनियोज्यघंटामुक्षयोरपिगलेवध्वारत्नमयति-
लकंललाटेबध्नीयात् ॥ एतादृशींसमभ्यर्च्यपायसनैवेद्यंदत्वामोदकानपूपान्गुडलवणजीरकसुवर्णदक्षिणांकंचुकंचनववेणुमयशूर्पेनिधायए-
कस्मायनेकंधेनवेऽन्याभ्योपतिपुत्रवतीभ्योब्राह्मणीभ्यःषडष्टौवादद्यात् ॥ ततोवेदपारगमलोलुपंब्राह्मणंऋणग्रस्तंदरिद्रंकुटुंबिनमाहूयदत्वा-
यथाविभववस्त्रालङ्कारादिभिःसंपूज्यततोधेनुंसोमोधेनुमितिमंत्रेणसवत्सांचसंपूज्याग्निमुपसमाधायसमिदाज्यचरुद्रव्यैःसोमोधेनुमितिमंत्रेणाप्र
त्येकमष्टोत्तरशतसंख्ययाहुत्वास्वयमुदङ्मुखःप्राङ्मुखायोपविष्टायगोपुच्छंतद्धस्तेनिधायदद्यात् ॥ अद्येत्यादिगोत्रायशर्मणेसुपूजितायइमांना-
लंकृतांसुवर्णधेनुंसवत्सांरौप्यखुरांरत्नपुच्छांघंटायुतकण्ठांरत्नतिलकांवायनोपेतांवस्त्रयुगच्छन्नांमुक्तालांगलांममजीवत्पुत्रसन्तानप्रतिबन्धकीभूत-
सकलदुरितनिरासनपूर्वकंआयुष्मत्सुपुत्रावाप्तिकामांवन्ध्यात्वहरांसिमांसुवर्णधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेतिसकुशति
लोदकंदद्यात् ॥ मन्त्रस्तुवायवीये ॥ धेनुरङ्गिरसःसृष्टेवसिष्ठेसुरभिस्तथा ॥ दुहिताचसुताभानोरत्रेश्चवसणास्वच ॥ याश्चगावःप्रवर्तन्ते-
वनेषूपवनेषुच ॥ प्रीणंतुताममसदापुत्रपौत्रप्रवर्धनाः ॥ प्रयच्छंतुदिवारात्रमविच्छेदंचसंततेः ॥ ततोदेवस्यत्वास्वस्तीत्युक्त्वायथाशाखंकामस्तुति-
म्पठेत् ॥ ततःसुवर्णदक्षिणांदत्वाप्रार्थयेत् ॥ मन्त्रस्तु ॥ वन्ध्यात्वङ्काकवन्ध्यात्वंकन्याप्रसवएवच ॥ तथैवमृतवन्ध्यात्वंदोषंममचतुर्विधम् ।

दानेनानेनहरतुयासाकामदुघाममेति ॥ इतिगांप्रार्थयित्वाप्रदक्षिणीकृत्यविसृज्यभूयसींदक्षिणांदत्वायथाशक्तिब्राह्मणान्भोजयित्वाजीवत्सुसं-
तानावाप्तिरस्त्विततिसांप्रार्थ्यजीवंत्युसंतानावाप्तिरस्त्विततिब्रूयुः ॥ ततःसुहृद्युतोभुंजीतेति ॥ ॥ इतिरथ्यालवहरसुरभिधेनुदानम् ॥
अथोभयतोमुखीदानम् ॥ मात्स्ये ॥ रुक्मशृङ्गींरौप्यखुरांमुक्तालांगूलभूषिताम् ॥ कांस्योपदोहनांराजन्सवस्त्रांद्विजपुंगवे ॥ प्रसूयमानां-
योदद्याद्धेनुंद्रविणसंयुताम् ॥ यावद्वत्सोयोनिगतोयावद्गर्भनमुंच्यति ॥ तावद्गौःपृथिवीज्ञेयासशैलवनकानना ॥ देवलः ॥ अलंकृत्योक्तविधि-
नांसुवर्णनिष्कलान्विता ॥ देयाचद्विपलामध्यापलैकादक्षिणाधमा ॥ वाराहेतु ॥ सुवर्णसाहस्रंतदर्धाधंसुख्यमुत्तमम् ॥ सुवर्णस्यसहस्रेण-
तदर्द्धेनापिवापुनः ॥ तस्याप्यर्धंशतस्यापिपंचाशच्चततोर्धकम् ॥ यथाशक्त्यापिदातव्यावित्तशाठ्यविवर्जितेति ॥ हेमाद्रौ ॥ उभयतोमुखीस्व
र्णनिष्कैणदत्वासद्यःशुद्धेत्पातकेभ्यस्समर्त्यइति ॥ सुवर्णनिष्कदक्षिणायतेनापिश्चचनिष्कश्चत्वारिंशन्माशकएवग्राह्यः ॥ अत्यशक्तौविंशति-
माषकोवादद्यादित्यर्थः ॥ दरिद्रेण ॥ ॥ अथदानप्रयोगः ॥ ॥ शुचिरद्येत्यादिउभयतोमुखीदानकृतंगोब्राह्मणपूजांचकरिष्ये ॥ इति
सङ्कल्प्य ॥ द्विजंकुटुंबिनंदरिद्रंवेदपारगंसुशीलंदृष्ट्वायथाविभवंवस्त्रालङ्कारादिभिःसंपूज्यतथागामपिसंपूज्यउोंत्वंमहीमवनिंविश्वधेनांतुर्वीत-
येवैयव्यायचरन्तीम् ॥ अरमयोनमसैजदर्णःसुतरणांअकृणोरिन्द्रसिन्धून् ॥ इतिगामनुमन्त्र्यप्रदक्षिणीकृत्यअद्येत्यादिगोत्रायशर्मणे-
अमुकशाखाध्यायिनेइमांधेनुपस्करांउभयतोमुखींसमुद्रशैलवनोपेतपृथ्वीदानसमफलावाप्तयेधेनुवत्सरोमसंख्ययुगदेवलोकमहिमत्वपितृपिता

महप्रपितामहकुलशतनरकोत्तारणपूर्वकघृतक्षीरवहबहुकुल्याकदधिपायसकर्दमदेशाधिकरणकोत्तारकेप्सितकामोब्रह्मलोकावाप्तिकामोरु-
द्रदैवत्यांइमांतुभ्यमहंसंप्रददेनममेतिसघृततिलपूर्णकांस्यपात्रयुतगोपुच्छंतद्धस्तेसकुशजलंदत्वाप्रार्थयेत् ॥ मन्त्रस्तु ॥ इमांगृहाणोभयमुखीं-
भवाच्चातासमास्तुवै ॥ ममवंशविशुद्ध्यर्थंसदास्वस्तिकरोभवेदितिविप्रोदेवस्त्वेतिप्रतिगृह्यस्वस्तीत्युक्त्वायथाशाखंकामस्तुतिंपठेत् ॥ ततःसु-
वर्णसहस्रमारभ्यपंचविंशतिचतुर्द्विसुवर्णमितांदक्षिणांदद्यात् ॥ ततोन्न्यूनामिति ॥ ततोविप्रस्तु॥ ॐइरावतीधेनुमतीहिभूतंसूयवसिनी-
मनुषेदशस्या ॥ व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैः ॥ १ ॥ ॐस्योनापृथिवीभवाऽनृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः
इतिमन्त्रद्वयंपठित्वावदेत् ॥ ॥ प्रतिगृह्णामिमांधेनुंकुटुंबार्थेविशेषतः ॥ स्वस्तिर्भवतुमेनित्यंरुद्रमातर्नमोस्तुते ॥ इतिनत्वागृहीतायाः-
दक्षिणेनपाणिनावत्समाकृष्यपठेत् ॥ ॐगर्भंनुसन्नन्वेषामवेदमहंदेवानांजनिमानिविश्वा ॥ शतंमापुरआयसीररक्षन्नधश्येनोजवसानीरदीय-
मितिमन्त्रेणवत्समाकृष्येत् ॥ निष्कासितेसतिकृत्यान्तरमाह ॥ ततोयजमानःप्राणानायम्यअद्येत्यादि॰ कृतस्योभयतोमुखीदानकर्मणःसांगता-
सिद्ध्यर्थंदेवादिमन्त्रैस्तर्पणंहोमंचकरिष्ये ॥ इतिसङ्कल्प्य ॥ स्थं॰ण्डलेऽग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआ-
ज्येनेत्यन्तमुक्त्वाचप्रधानंपृथिवींचिःगौरींसकृदाज्येनप्रजापतिंचतुरशीत्याआज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यन्तमुक्त्वासमिद्द्वयमन्वा-
धायइध्माबर्हिषीपरिसमूह्यपरिसमूहनादिचक्षुष्यन्तंकृत्वाकुशास्तृतभूमौअग्नेःपश्चाद्देवसात्कृताभिरद्भिःवक्ष्यमाणमन्त्रैर्देवादींस्तर्पयेत् ॥ तेच-

मन्त्राः । ओंयेदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वम् ॥ देवांस्तर्पयामि ॥ ओंउ-
शन्तस्त्वानिधीमह्युशन्तःसमिधीमहि । उशन्नुशतआवहपितॄन्हविषेअत्तवे । पितॄंस्तर्पयामि ॥ ओंइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरु-
ष्ण्याअसिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया सरितस्तर्पयामि । ओंअद्भिःसुतोमतिभिश्चनोहितःप्ररोचयन्रोदसीमातराशुचिः
रोमाण्यव्यासमयाविधावतिमधोर्धारापिन्वमानादिवेदिवे ॥ पर्वतांस्तर्प० ॥ ओंवनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम ॥ यंत्वा-
मयंस्वधितिस्तेजमानःप्रणिनायमहतेसौभगाय ॥ वनस्पतींस्तर्पयामि ॥ ओंसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायन्त्यनिविशमानाः ॥ इन्द्रो-
यावज्रीवृषभोरराद ताआपोदेवीरिहमामवन्तु ॥ समुद्रांस्तर्पयामि ॥ ओंअहिरिवभोगैःपर्येतिबाहुंज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोवि-
श्वावयुनानिविद्वान्पुमान्पुमांसम्परिपातुविश्वतः ॥ नागांस्तर्पयामि ॥ ओंमधुवाताऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्नःसंत्वोषधिः ॥
ओषधीस्तर्प० ॥ इत्यष्टाभिस्तर्पयित्वाचतस्रआज्याहुतीर्जुहुयात् ॥ ओंईल्लेद्यावापृथिवीपूर्वचित्तयेग्निङ्घर्मंसुरुचंयामन्निष्टये ॥ याभिर्भरे-
कारमंशायजिन्वथस्ताभिरूषुऊतिभिरश्विनागतम्स्वाहा ॥ पृथिव्याइदंनमम ॥ ओंमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षिताम् ॥ पिपृतान्नो-
भरीमभिःस्वाहा ॥ पृथिव्याइदन्नमम ॥ २॥ ओंउर्वीपृथ्वीबहुलेदूरेअन्तेउपब्रुवेनमसायज्ञेअस्मिन् ॥ दधातेयेसुभगेसुप्रतूर्तीद्यावार-
क्षतंपृथिवीनोअभ्वात्स्वाहा ॥ पृथिव्याइदं० ॥ ओंगौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसह-

स्वाचरापरमेष्ठोमन्त्स्वाहा ॥ गौर्याइदं॰ ॥ ४ ॥ इतिचतस्त्रआज्याहुतीर्हुत्वाततःसमस्तव्याहृतिभिश्चतुरग्नीत्याज्याहुतीर्हुत्वाप्रजापतयइ-
दंनममेतित्यजेत् ।। ततःस्विष्टकृदादिहोमशेषंसमाप्यभूयसींदक्षिणांदत्वागामनुव्रज्यगोमतींजपेत् ॥ ।। महाभारते ॥ गावोमामुपतिष्ठन्तु
हेमशृंग्यःपयोमुचः ।। सुरभ्यःसौरभेयश्चसरितःसागरंयथा ।। गावःपश्याम्यहंनित्यंगावःपश्यंतुमांसदा । गावोस्माकंवयंतासांयतोगावस्ततोवयम् ।।
घृतक्षीरप्रदागावोघृतयोन्योघृतावहाः ॥ घृतनद्योघृतावर्त्तास्तामेसंतुसदागृहे ॥ घृतंमेहृदयेनित्यंघृतंनाभ्यांप्रतिष्ठितम् ॥ घृतंमेसर्वतश्चैवघृ-
तंमध्येवसाम्यहम् ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ।। गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् ॥ गावःसुरभयोनित्यंगावोगुग्गुलसन्निभा
गावःप्रतिष्टाभूतानांगावःस्वस्त्ययनंमहत् ॥ अन्नमेवपरङ्गावोदेवानांहविरुत्तमम् ॥ पावनंसर्वभूतानांरक्षंतिचवहन्तिच ॥ हविषामन्त्रपूतेन-
तर्पयन्त्यमरांदिवि ।। ऋषीणामपिहोतृणांगावोहोमेप्रतिष्ठिताः ।। सर्वेषामेवभूतानांगावःशरणमुत्तमम् ॥ गावःपवित्रम्परमंगावोमङ्गल
मुत्तमम् ॥ गावःसर्वस्यलोकस्यगावोधन्याःसनातनाः ।। नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ।। नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ।
पुनःप्रदक्षिणांकृत्वाधेनुंद्विजवरंचतंइतिजपित्वानमस्कृत्यविसृज्यपायसादिनासम्यक्द्वादशब्राह्मणान्भोजयित्वातेभ्योदक्षिणांदत्वास्वस्त्ययनं-
वाचयित्वासुहृद्युतोभुंजीतेति ॥ ॥ इत्युभयतोमुखीदानप्रयोगः ॥ ॥ अथप्रसङ्गादुभयतोमुखीप्रतिग्रहप्रायश्चित्तम् ।। ममोभयतोमुखी
प्रतिग्रहदोषपरिहारार्थंकृच्छ्रत्रयप्रायश्चित्तंयथाप्रत्याम्नायेनकरिष्ये । इतिसङ्कल्प्यकृच्छ्रत्रयप्रायश्चित्तंकुर्यादित्युक्तंदानोद्योतेरुणस्मृतौरहस्य-

प्रायश्चित्तेष्वशक्तस्य ॥ इत्युभयतोमुखीप्रतिग्रहे प्रायश्चित्तम् ॥ ॥ इत्युभयतोमुखीगोदाननिरूपणम् ॥ अथदशदानानिमदनरत्ने ॥
जातूकर्ण्यः ॥ ॥ उत्क्रान्त्यादीनिदानानिदशदद्यान्मृतस्यतु ॥ गोभूतिलहिरण्याज्यंवासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानान्यनु-
क्रमादिति ॥ एतानिदशदानानिनराणांमृत्युजन्मनोः ॥ कुर्यादभ्युदयार्थंचप्रेतेपिहितपरत्रचेति ॥ हेमाद्रिः ॥ तत्रादौगोदानम् ॥ दानवि-
धिस्तुपूर्वोक्तएवममसर्वपापक्षयार्थंइमांगांधेनूपस्कारांरुद्रदैवत्यांसुवर्णादिदक्षिणायुतांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मन्त्र-
स्तु ॥ यज्ञसाधनभूतायाविश्वस्यानप्रदायिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ गवामङ्गेष्वितिप्रार्थयेदपि ॥ ॥ इतिगोदानम् ॥
अथभूमिदानम् ॥ मात्स्ये ॥ निवर्तनमिताभूमिर्देया ॥ दशहस्तेनदण्डेनत्रिंशद्दण्डानिवर्तनमितिस्मरणात् ॥ दानान्यन्यानिसर्वाणिकन-
कादीनियानिच ॥ तानिभूमिप्रदानस्यकलांनार्हन्तिषोडशीमिति ॥ अद्येत्यादिगोत्रायशर्मणेसुपूजितायषष्टिवर्षसहस्रपरिमितस्वर्गेशिवपुर-
निवासकामःसर्वपापक्षयकामइमांभूमिंबहुसस्यप्रदांविष्णुदैवत्यांतुभ्यमहंसंप्रददेनममेतिदद्यात् ॥ मन्त्रस्तु ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमु-
द्धृता ॥ अनन्तसस्यफलदाअतःशान्तिंप्रयच्छमे ॥ यस्यांरोहन्तिबीजानिकालेचैवमहीतले ॥ त्वत्प्रसादाच्चसकलाममसंतुमनोरथाइति ॥
इतिभूमिदानम् ॥ अथतिलदानम् ॥ तिलास्तुद्रोणत्रयमितादेयाः ॥ पंचमणपरिमिताभवन्ति ॥ अद्येत्यादिगोत्रायशर्मणेइमेतिलाःसो-
मदैवताविष्णुदैवतावासर्वपापक्षयकामस्तुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ महर्षेर्गात्रसंभूताःकश्यपस्यतिलाःस्मृताः ॥ तस्मादेषांप्रदाने-

नममपापंव्यपोहतु ॥ इतितिलदानम् ॥ अथहिरण्यदानम् ॥ तच्चनिष्कत्रयमितंकनिष्टम् ॥ द्वादशमाषकोनिष्कः ॥ अद्येत्यादिगोत्रा-
यशर्मणोइदंहिरण्यंअग्निदैवतंसमस्तपापक्षयकामस्तुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनन्त-
पुण्यफलदमतःशान्तिंप्रयच्छमे ॥ ॥ इतिहिरण्यदानम् ॥ अथाज्यदानम् ॥ घृतन्तुप्रस्थमितंदद्यात् ॥ विंशतिशेटकमितंभवति ॥ अ-
द्येत्यादिगोत्रायशर्मणेइदमाज्यंविष्णुदैवतंसमस्तपापक्षयकामस्तुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ कामधेनोःसमुद्भूतंसर्वक्रतुषुसंस्थितम् ।
देवानामाज्यमाहारअतःशान्तिंप्रयच्छमे ॥ ॥ इत्याज्यदानम् ॥ अथवस्त्रदानम् ॥ सूक्ष्मवस्त्रद्वयंबहुमूल्यंमष्टहस्तमितंदद्यात् ॥ गोत्राय-
शर्मणेसमस्तपापक्षयकामःइमेबार्हस्पत्यदैवतेवाससीतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ शीतवातोष्णसंत्राणंलज्जायारक्षणंपरम् ॥ देहा-
लङ्करणम्वस्त्रमतःशान्तिंप्रयच्छमे ॥ ॥ इतिवस्त्रदानम् ॥ अथधान्यदानम् ॥ सार्द्धखारीद्वयंव्रीह्योदेयाः ॥ तच्चसार्द्धशतद्वयमणपरिमि-
तंमणपञ्चकंचेति ॥ गोत्रायशर्मणेइदममुकसंख्यंप्रजापतिदैवत्यसमस्तपापक्षयपूर्वकैहिकामुष्मिकशिवफलावाप्तिकामस्तुभ्यमहंसंप्रददेनममेति ॥
मन्त्रस्तु ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरम्महत् ॥ प्राणिनांजीवनोपायमतःशान्तिंप्रयच्छमे ॥ ॥ इतिधान्यदानम् ॥ अथगुडदानम् ॥
गुडम्पञ्चषष्ठिमितंदद्यात् ॥ अद्येत्यादिममसमस्तपापक्षयपूर्वकंगृहेलक्ष्म्याःस्थैर्यत्वसिद्धिकामोगोत्रायशर्मणेसुपूजितायायंगुडोरसवर्यःसोमदै-
वतःसदक्षिणस्तुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ गुडमिक्षुरसोद्भूतमन्नाणांप्रणवंयथा ॥ दानेनानेनमेतत्स्यात्पराल्लक्ष्मीःस्थिरागृहे ॥

इतिगुडदानम् ॥ अथरजतदानम् ॥ ॥ पलत्रयमितंरौप्यंदद्यात् ॥ अद्येत्यादिममसमस्तपापक्षयपूर्वकशिवविष्णुपितृप्रीतिकामोगोत्रायशर्मणेसुपूजितायइदंरजतंविष्णुदैवतंसदक्षिणांतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ प्रीतिर्यतःपितॄणांचविष्णुशङ्करयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतःशांतिंप्रयच्छमे ॥ ॥ इतिरजतदानम् ॥ अथलवणदानम् ॥ लवणंतार्द्धखारिकंदद्यात् ॥ अद्येत्यादिममसमस्तपापक्षयपूर्वकशिवप्रीतिकामोगोत्रायशर्मणेसुपूजितायइदंलवणंसर्वरसोत्कृष्टंसोमदैवत्यंसदक्षिणांतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंयस्मादतःशांतिंप्रयच्छमे ॥ इतिलवणदानम् ॥ इतिदशदानानि ॥ ॥ अथपंचधेनुदानानि ॥ तत्रादौपापापनोदधेनुदानम् ॥ ब्राह्मे ॥ दानोपस्करास्तुगोदानोक्ताएव ॥ अद्येत्यादिममात्मनोमनोवाक्कायकर्मभिराजन्मोपार्जितपापापनोदकामोगोत्रायशर्मणेसुपूजितायइमांकृष्णांपापापनोदधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ आजन्मोपार्जितम्पापंमनोवाक्कायकर्मभिः ॥ तत्सर्वंनाशमायातपापधेनुप्रदानतः ॥ ततःसुवर्णदक्षिणांदद्यात् ॥ इतिपापापनोदधेनुदानम् ॥ अथऋणापनोदधेनुदानम् ॥ ब्राह्मे ॥ अद्येत्यादिममआजन्मोपार्जितैहिकामुष्मिकसमस्तऋणापातकच्छेदकामोगोत्रायशर्मणेसुपूजितायइमांसमस्तऋणापनोदरक्तधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेति ॥ ततःसुवर्णदक्षिणांदद्यात् ॥ इतिऋणापनोदधेनुदानम् ॥ अथप्रायश्चित्तधेनुदानम् ॥ ब्राह्मे ॥ अद्येत्यादिमयाजन्मप्रभृतिअद्ययावदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्यामरणान्तपापापनोदका-

मोगोत्रायशर्मणेसुपूजितायप्रायश्चित्तत्वेनइमांकपिलांधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेति ।। मन्त्रस्तु ।। प्रायश्चित्तेममत्व
न्नेनिष्कृतिर्नकृताक्वचित् ।। तस्यपापस्यशुध्यर्थंधेनुमेनांददामिते ।। ततःसुवर्णंदक्षिणांदद्यात् ।। इतिप्रायश्चित्तधेनुदानम् ।। ।। अथवै-
तरणीदानम् ।। ब्रह्मवैवर्ते ।। यासावैतरणीनामयमद्वारेमहानदी ।। शतयोजनविस्तीर्णापृथुत्वेसामहासरित् ।। अगाधानन्तरूपाचदृष्टमा-
त्राभयप्रदा ।। पतन्तितत्रवैमर्त्याःक्रंदमानाःसुदारुणाम् ।। उष्णोवर्षातिशीतेचसामतेवातिवाभृशम् ।। दातारन्तारयेद्यस्मात्तस्माद्वैतरणीस्मृ-
तेति ।। दानकालोपितत्रैवमदनरत्ने ।। अयनेविषुवेपुण्येव्यतीपातेदिनक्षये ।। अन्येषुपुण्यकालेषुदीयतेदानमादरात् ।। पाटलामथवाकृ-
ष्णांदद्याद्वैतरणींतुगाम् ।। स्वर्णशृङ्गींरौप्यखुरांकांस्यपात्रोपदोहनाम् ।। कृष्णवस्त्रयुगच्छन्नांसप्तधान्यसमन्विताम् ।। कार्पासद्रोणशिखरेआसी-
नांहैमोंयमप्रतिमांलोहदण्डयुतांमहिषारूढांपाशहस्तांकृत्वाइक्षुदण्डमयमुडुपम्पट्टसूत्रेणबध्वाउडुपेधेनुंकृत्वाछत्रोपानत्समायुक्तांवैतरणींगां-
मृत्युकालेवादद्यात् । तद्यथा ।। समयमद्वारस्थितवैतरण्याख्यनद्युत्तरणार्थंगोत्रायशर्मणेसुपूजितायइमांकृष्णांगांसवत्सांयमप्रतिमायुक्तांकृष्ण
वस्त्रयुगच्छन्नांसप्तधान्ययुतांरक्तमाल्याद्यलंकृतांस्वर्णशृङ्गाद्युपस्करोपेतांकार्पासद्रोणशिखरांसच्छत्रोपानत्कांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेति
इतितिलजलघृतयुतगोपुच्छंद्विजहस्तेदद्यात् ।। मन्त्रस्तु ।। यमद्वारपथेघोरेघोरावैतरणीनदी ।। तान्तर्तुंकामोददातेकृष्णांवैतरणींतुगामिति
ततःसुवर्णंदक्षिणांदत्वाप्रार्थयेत् । विष्णुरूपद्विजश्रेष्ठभूदेवगतिपावन ।। तर्तुंवैतरणीमेनांदत्तांकृष्णांतुगामिमाम् ।। ततःपुच्छंस्वकरेधृ-

त्वानुव्रजेत्सप्तपदानि ॥ धेनुप्रार्थनामन्त्रस्तु ॥ धेनुके त्वं प्रतीक्षस्व यमद्वारे महापथे ॥ उत्तितीर्षुरहं देवि वैतरण्यै नमोऽस्तु ते इति प्रणम्याभ्युक्ष्य-
सोदक्षिणां दद्यात् ॥ कृष्णायाअभावे अन्यवर्णापि देया गोरभावे द्रव्यं देयम् ॥ पित्रादेरशक्तौ पुत्रादिर्दद्यात् ॥ ॥ तत्रायमन्त्रः ॥ ॥
उत्तितीर्षुरयं मातः पठन् ॥ तत्तु त्वं वैतरणीमस्येति ॥ पतन्ति ये तां तु तमस्येति ॥ इति वैतरणीदानम् ॥ ॥ अथ उत्क्रान्तिधेनुदानम् ॥
ब्राह्मे ॥ उत्क्रान्तिवैतरण्यौ च दशदानानि चैव हि ॥ प्रेते पित्रत्वातं प्रेतं शवधर्मेण दाहयेदिति ॥ तद्यथा ॥ यो मुमूर्षुः पुरुषः स्वयं चेतनवेला-
यामोलियं वेदपारगं ब्राह्मणमाहूय ॥ अद्येत्यादि ममसुखेन प्राणोत्क्रमणप्रतिबन्धकोक्तनिष्कृत्यनुक्तनिष्कृतिजनितसकलपापक्षयद्वारासुखेन-
प्राणोत्क्रमणसिद्ध्यर्थमिमामुत्क्रान्तिसंज्ञकां धेनुं यथाशक्तिसोपस्कारां रुद्रदैवत्यां गोत्रायशर्मणे सुपूजिताय तुभ्यमहं संप्रददे न मम इति ॥ मन्त्रस्तु ।
अत्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रमणसिद्धये ॥ तुभ्यमेतां संप्रददे धेनुमुत्क्रान्तसंज्ञकामिति ॥ ततः सुवर्णदक्षिणां दद्यात् ॥ गोरभावे तु तत्स्वरू-
पभूतं द्रोमल्यं वा दद्यात् । पित्रादेरशक्तौ तु पुत्रादिर्दद्यात् ॥ तत्र ममेति पदस्थाने पित्रादेरिति वदेत् ॥ इत्युत्क्रान्तिधेनुदानम् ॥ इयमेव मोक्ष
धेनुरिति केचित् ॥ तद्यथा ॥ मोक्षदो वासुदेवस्तु वेदशास्त्रेषु गीयते ॥ तत्प्रीतये द्विजाग्र्याय मोक्षधेनुं ददाम्यहम् ॥ इत्युक्त्वा अद्येत्यादि ममस-
मस्तपापक्षयपूर्वकसंसारमोक्षावाप्तिकामः श्रीपापहा महाविष्णुप्रीतिकामश्च इमां मोक्षधेनुं यथाशक्तिसोपस्कारां रुद्रदैवत्यां गोत्रायशर्मणे सुपूजिताय-
तुभ्यमहं संप्रददे न मम इति ॥ मन्त्रस्तु ॥ मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन ॥ मोक्षधेनुप्रदानेन मम मोक्षोऽस्तु वेगतः इति ॥ ततः सुवर्णदक्षि

णांदद्यात् ॥ गोरभावेतुपूर्वोक्तमनुसंधेयम् ॥ इतिमोक्षधेनुदानम् ॥ ॥ अथमहिषीदानम् ॥ हेमाद्रौभविष्ये ॥ महिषीदानमाहात्म्यंप्र-
कथयामियुधिष्ठिर ॥ पुण्यंपवित्रमायुष्यंसर्वकामप्रदन्तथा ॥ दानकालोपितचैव ॥ चन्द्रसूर्यग्रहेकार्तिक्यांअयनेसितचतुर्दश्यांसंक्रान्तौसर्वा-
रिष्टनाशायचित्तप्रशस्तयेदेया ॥ प्रथमप्रसूतांदोषवर्जितांदद्यात् ॥ तत्रादौयमस्वरूपायैमहिष्यैनमइतिनत्वाप्रार्थयेत् ॥ महिषीब्रह्मसूता-
चलक्ष्मीरूपेणसंस्थिता ॥ प्रार्थितासिमयादेवियममार्गंनिवारयेति ॥ तथा ॥ महिषीयमरूपात्वविश्वामित्रविनिर्मिते ॥ पूजिताहरमेपापं
सर्वदानफलप्रदे ॥ इन्द्रस्याप्सरसोदेविमहिषीरूपविष्णुना । सर्वभाग्यप्रदेदेविदीर्घशृङ्गीनमोस्तुतइति ॥ अद्येत्यादिममदीर्घायुष्यैहिकामुष्मि
कयज्ञयाजित्वपितृतारणात्मशुभविंशतिधेनुदानसमफलावाप्तिसर्वदोत्तमफलपुत्रपौत्रबहुत्वस्वर्यलोकनिवाससहाराज्यावाप्तिकामस्वममसर्वारि
ष्टनिवारणार्थंशनैश्चरजनितपीडाशान्त्यर्थंगोत्रायशर्मणेसुपूजितायइमांमहिषींसालंकृतांरक्तमाल्यवस्त्राच्छन्नांस्वर्णशृङ्गींरौप्यखुरांताम्रदोहांहै
मतिलकांसप्तधान्ययुतांघंटाभरणाम्धेनूपस्कारांयमदैवत्यांतुभ्यमहंसंप्रददेनममेतिसकुशतिलजलंतद्धस्तेदद्यात् ॥ विप्रोदेवस्यत्वेतिपठन्पृष्ट-
देशंस्पृष्ट्वास्वस्तीतिप्रतिगृह्ययथाशाखङ्कामस्तुतिम्पठेत् ॥ दातातुइन्द्रादिलोकपालानांयाराज्यमहिषीशुभा ॥ महिषीदानमाहात्म्यात्सास्तुमेस-
र्वकामदा । धर्मराजस्यसाहाय्येयस्याःपुत्रप्रतिष्ठितः ॥ महिषासुरस्यजननीयासास्तुवरप्रदाममेतिदत्वाप्रदक्षिणीकृत्यब्रह्मणेताम्पयस्विनी
मिति ॥ दक्षिणातुदशपंचविंशकोवासुवर्णाःअतिनिकृष्टोत्रेयः ॥ ततोभूयसींदक्षिणांदत्वाकर्मेश्वरार्पणंकुर्यात् ॥ ॥हेमाद्रौभविष्यपुराणे

अनेनविधिनादत्वामहिषींद्विजपुंगवे ॥ सर्वान्कामानवाप्नोतिइहलोकेपरत्रचेति ॥ ब्राह्मणःसर्वकामस्तुक्षत्रियोजयकाम्यया ॥ धनकामस्तु
वैश्योवैशूद्रोभिलषितामियात् ॥ महिषदानमप्येवमेवज्ञेयम् ॥ इतिमहिषीदानम् ॥ ॥ अथमेषीदानम् ॥ भविष्ये ॥ शृणुपार्थपरं-
दानंसर्वकल्मषनाशनम् ॥ यद्दत्वाविविधम्पापंसद्योविलयमृच्छति ॥ अयनेविषुवेग्रहणाद्दयेदुःस्वप्नदर्शने ॥ चित्तवित्तानुसारेकालेतीर्थेगृहे-
वाकार्यम् ॥ शङ्करंब्रह्माणांविष्णुंगौरींगायत्रींश्रीसहितांयथाशक्तिसुवर्णप्रतिमांकृत्वाशय्यासहेंद्रंग्रहान्लोकपालांश्चकृत्वासंपूज्यतत्पश्चिमतस्त्व
गृह्योनाग्निंप्रतिष्ठाप्यस्थापितदेवतामंत्रैस्तिलाज्यैरष्टोत्तरशताष्टाविंशतिरष्टाष्टसंख्याकाहुतीर्हुत्वाततोमेषींद्विजंचवस्त्रालङ्कारादिभिर्यथाविभवं
संपूज्यअद्येत्यादिसर्वपापक्षयदुःस्वप्नसूचितारिष्टविनाशपुत्रपौत्रधनकीर्तियशःकामइमांमेषींसुवर्णतिलकाद्यङ्कितांकौशेयपरिधानांसप्तधान्य-
समायुक्तांपुष्पोपहारांसन्मुखस्थापितलवणांब्रह्मविष्णुशिवादिप्रतिमायुक्तामुक्तोपस्करांगोत्रायशर्मणेसुपूजितायइमांतुभ्यमहंसंप्रददेनममेतिद
त्वासुवर्णंदक्षिणांदद्यात् मन्त्रस्तु । वाङ्मनःकार्यजनितंयत्किंचिन्ममदुष्कृतम् । तत्सर्वंविलयंयातुत्वद्दानेनोपसंचितमिति । प्रतिमास्थापनंति
लकुंभे ॥ मेषीप्रत्यक्षांसुवर्णनिर्मितांवा ॥ विप्रोदेवस्यत्वेतिश्टङ्गेप्रतिगृह्ययथाशाखंकामस्तुतिम्पठेत् ॥ प्रतिगृहीतविप्रसंभाषणंमुखावलो
कनंचवर्जयेत् ॥ भविष्ये ॥ शतेनकारयेत्तांतुसुवर्णस्यप्रयत्नतः ॥ यथाशक्त्याथवाकुर्यादि चशाठ्यन्नकारयेत् ॥ इतिमेषीदानम् ॥
अथअजादानम् ॥ सुमंतुः ॥ अजापालोमहीपालोह्यजादानैर्दिवङ्गतः ॥ अयनेविषुवेचैवयुगादौग्रहणेषु च ॥ अमावास्यामजादानंपौर्ण

मास्यांचशस्यते ॥ विधिन्तस्यप्रवक्ष्यामिविश्वामित्रेणनिर्मितम् ॥ अजांविप्रंचयथाविभवंवस्त्रालङ्कारादिभिसंपूज्य ॥ अद्येत्यादिगोत्रायशर्मणइमांअजांसप्तधान्योपरिस्थितांवस्त्रमाल्योपशोभितांवज्रनेत्रांहेमशृङ्गींताम्रपृष्ठींरौप्यपादांसदोहनपात्रांसपञ्चाब्लांत्वाष्ट्रदैवतांतुभ्यमहंसंप्रददेन-ममेति ॥ कुर्चौतिलोदकंदत्वादद्यात् ॥ मन्त्रस्तु ॥ मन्त्रवासेअजेशलन्धणोयन्नसम्पत्करेशुभे ॥ स्वष्टात्वंदहमेपापंजन्मान्तरशतैःकृतमिति तथा ॥ त्वंपूर्वंब्रह्मणासृष्टापवित्रंभवतीपरम् ॥ त्वत्प्रसूतौस्थितायज्ञास्तस्माच्छांतिंप्रयच्छमे ॥ देवस्यत्वेतिमन्त्रेणप्रतिग्रहः ॥ ततःसुवर्णंदक्षि-णांदद्यात् ॥ इत्यजादानम् ॥ ॥ अथमंदाग्निहरंमेषदानम् ॥ बौधायनः ॥ अग्नेर्मांद्यमवित्तस्वयस्त्वेताग्नेर्विनाशकः । वक्ष्यासितत्प्रतीकारंयथोक्तंब्रह्मणापुरा ॥ पलार्धेनतदर्धेनतदर्धार्धेनवापुनः ॥ राजतंकारयेत्सौम्यंअग्नेर्वाहनमुत्तमम् ॥सौवर्णास्यखुराःकार्याःश्वेतवस्त्रे-णावेष्टयेत् । तत्रश्वेतपुष्पंश्वेतगन्धमधूत्कटंधूपंदद्यात् ॥ द्रोणद्वयंतंडुलराशौस्थितंपूजयेत् ॥ मेषादाग्नेयांदिशिसमिदाज्यतिलैर्होमःका-र्यः ॥ अथास्यप्रयोगः ॥ पुण्यकालेअद्येत्यादिममपूर्वकर्मविपाकोत्थचेताग्निनाशजनिताग्निमांद्यत्वनिरासपूर्वकप्रजाठराग्निप्रवलत्वसिध्यायुरा-रोग्यतासिद्ध्यर्थंमेषदानङ्करिष्ये इतिसङ्कल्प्यमेषप्रतिमांमेषंवाप्रत्यक्षंसंस्थाप्यआग्नेयांस्वगृह्योक्तविधिनाग्निप्रतिष्ठाप्यान्वाधायत्वरग्निक्रमेणस-मिदाज्यतिलैरष्टोत्तरशताष्टाविंशत्यष्टसंख्ययावाजुहुयात् ॥ एतैर्मन्त्रैः । समिदाज्यघृताक्ततिलाहुतिभिः ॥ ॐअग्निर्मूर्द्धादि०भिस्वाहा ॥ अग्नयइ० ॥ १ ॥ ॐअग्नेनयसुपथारा०स्वाहा ॥ अग्नयइ० ॥ २ ॥ ॐअग्निनाग्निःस०स्यःस्वाहा ॥ अग्नयइं० ३ ॥ इतित्रिभिर्मन्त्रैर्विवक्षि-

तसंख्ययासमिदाज्यतिलैर्हुत्वास्विष्टकृदादिप्रणीताविमोकांतंकृत्वाकुम्भोदकैर्यजमानोभिषिंचेदेतैर्मंत्रैः ॥ बौधायनः ॥ आपोहिष्ठेत्यपित्र्यचाहिरण्येत्यृचेन ॥ पवमानानुवाकेनमार्जयेद्रोगिणन्ततः ॥ शन्नोवातानुवाकेनशांतिंचापिप्रकल्पयेत् ॥ तस्मैहुतवतेरोगीप्राङ्मुखायह्युदङ्मुखः ॥ सदक्षिणम्पूजितायदत्वावाहनमुत्तममिति ॥ गोलायशर्मणेइदंसोपस्करंमेषंप्रत्यक्षंराजतंवावरुणदैवतंसङ्कल्पोक्तफलकामस्तुभ्यमहंसंप्रददेनममेतिदत्वाप्रार्थयेत् ॥ बौधायनः ॥ देवानांयोमुख्यंहव्यवाहनःसर्वपूजितः ॥ तस्यत्वंवाहनंपूज्यंदेवेशेन्द्रैर्महर्षिभिः ॥ अग्निमांद्यम्पूर्वकर्मविपाकोत्थंतुयन्मम ॥ तत्सर्वंनाशयक्षिप्रंजाठराग्निप्रवर्द्धयेति ॥ विप्रस्तु ॥ शृंगेदेवस्यत्वेतिप्रतिगृह्ययथाशाखंकामस्तुतिम्पठेत् ततःसुवर्णंदक्षिणांदत्वायथाशक्तिभूयसींदक्षिणांदत्वाब्राह्मणांस्तभोजयित्वासुहृद्यतोभुंजीतेति ॥ इतिमंदाग्निहरंमेषदानम् ॥ ॥ अथदशाचलदानानिमात्स्ये ॥ प्रथमोधान्यशैलःस्याद्द्वितीयोलवणाचलः ॥ गुडाचलस्तृतीयःस्याच्चतुर्थोहेमपर्वतः ॥ तिलशैलःपंचमःस्यात्षष्टःकार्पासपर्वतः ॥ सप्तमोघृतशैलःस्यादष्टमोरत्नपर्वतः ॥ नवमोराजतःशैलोदशमःशर्कराचलइति ॥ कालमाहमात्स्ये ॥ अयनेविषुवेचैवव्यतीपातेदिनक्षये ॥ शुक्लपक्षेतृतीयायामुपरागेशशिक्षये ॥ विवाहोत्सवयज्ञेषुद्वादश्यामथवापुनः ॥ शुक्लायांपंचदश्यांवापुण्यर्क्षेवाविधानतः ॥ धान्यशैलादयोदेयायथाशास्त्रंविधानतः ॥ तीर्थेवायतनेवापिगोष्ठेवायगवांगणे ॥ तत्रचतुरस्रंद्वादशहस्तमण्डपंउदङ्मुखंप्राङ्मुखंवाप्राच्यामुदीच्यांवाएकमेवद्वारंनचत्वारि ॥ तोरणमप्येकमेव ॥ मण्डलंगोमयेनोपलिप्यकुशानास्तीर्य ॥ तन्मध्येपर्वतंकुर्याद्विष्कम्भैःपर्वतैर्युतम् ॥ धान्य

द्रोणसहस्रेण भवेद्गिरिरिह्योत्तमः ॥ मध्यमः पंचशतिकः कनिष्ठः स्यात्त्रिभिः शतैर्मेरुर्व्रीहिमयो महान्मध्ये तदुपरि मंदारपारिजातककल्पवृक्षादयो-
हेममयास्त्रयः ॥ मध्ये कल्पतरुर्मंदारपारिजातौ दक्षिणोत्तरयोः ॥ पूर्वपश्चिमयोर्हरिचंदनसन्तानौ ॥ मुक्ताफलवज्रगोमेदकपुष्परागगारुत्म-
तनीलरत्नवैडूर्यसरोजरागरत्नानि द्वन्द्वशः पूर्वादिदिगवस्थितरजतशृंगेषु निवेश्यानि ॥ मंदारः श्रीखण्डखंडैरभितः प्रवाललतान्वितः शुक्तिशिलात-
लः स्यात् ॥ शर्कराचले तु हरिचंदनसन्तानौ आवश्यकौ ॥ तत्र पूर्वादिदिक्षु ब्रह्मविष्णुरुद्रसूर्यप्रतिमाः पक्षिसङ्घान्मनिसङ्घांश्च हैमान् प्रागादिदिक्-
चतुष्टये क्रमेण मुक्ताफलहीरकैः गोमेदपुष्परागैर्मरकतनीलैः वैडूर्यपद्मरागैः समसंख्याकैर्भूषितं रौप्यघटङ्गचतुष्कन्तद्वहिर्दिगष्टके रौप्यमिन्द्रादिलो-
कपालप्रतिमाष्टकं समन्तात् श्रीखंडैर्लतानां स्थाने प्रवालानि शिलानां शुक्तीः प्रागादिषु मेघानां श्वेतपीतकर्बुररक्तवस्त्राणि ॥ वंशानामिक्षून् । जलस्य
घृतं गंधपुष्पनानाफलानि च परितः संस्थाप्य पंचवर्णवितानकं चोपरि बध्नीयात् । ततो यवैर्मेरोः षोडशांशेन प्राच्यां मंदारं तदुपरि नरहृपंगणालयं कदंबं
च सौवर्णं कदंबमूले हैमः कामदेवः अरुणोदसरः स्थाने दुग्धपूर्णरौप्यपात्रे । रौप्यं चैत्ररथाख्यवनं गन्धपुष्पफलवस्त्राणि च स्थापयेत् । याम्ये मेरुषोड-
शांशेन गोधूममयं गन्धमादनं तदुपरि सौवर्णं जंबूवृक्षं तन्मूले सौवर्णं मुदङ्मुखं धनदं मानससरः स्थाने सघृतं रौप्यपात्रं रौप्यं गन्धर्वाख्यं वनं नानाफलवस्त्र
माल्यानि च स्थापयेत् पश्चिमे मेरुषोडशांशतिलमयं विपुलाख्यं पर्वतं तदुपरि सौवर्णं पिप्पलं तन्मूले प्राङ्मुखीं सौवर्णां हंसप्रतिमां सितोदसरःस्थाने द
धिपूर्णं रौप्यपात्रं रौप्यं वैभ्राजं वनं वस्त्रफलमाल्यानि च स्थापयेत् ॥ उत्तरे मेरुषोडशांशमितमाषैः सुपार्श्वं पर्वतं तदुपरि सौवर्णं वटं तन्मूले दक्षिणा-

भिमुखींसवत्सांसुवर्णधेनुंभद्रसरःस्थानेमधुपूर्णंरौप्यपात्रंरौप्यंसावित्रंवनंवस्त्रफलमाल्यानिचस्थापयेत् ।। एवंवक्ष्यमाणपर्वतेष्वपिमेरुद्वयचतु-
र्थांशेनलवणादिद्रव्येणप्रागादिषुविष्कंभपर्वताज्ञेयाःतत्राचार्यस्त्वेकः ।। ऋत्विजश्चत्वारः ।। प्राच्यामेकमेवकुण्डमितितत्रैवजुहुयुः ।। अथय-
जमानःकृतनित्यक्रियःपुण्यकालेअद्येत्यादि० अप्सरोगन्धर्वयुतविमानकरणकस्वर्गलोकगमनसाग्रमन्वन्तरकालदेवलोकनिवासोत्तरभूलोकराज
राजत्वकामईश्वरप्रीतिकामोवाश्वोधान्यपर्वतदानंकरिष्येइतिसङ्कल्प्यतदङ्गत्वेनगणेशपूजननांदीश्राद्धानिचकृत्वाआचार्यमृत्विजश्चवृत्वामधुप-
र्कादिनासंपूज्यमण्डपपूजनाद्याचार्यनियोगान्तंकुर्यात् । ततआचार्योनवग्रहस्थापनादिकुण्डसमीपस्थितकलशस्थापनांतंकुर्यात् ।। अथऋत्विजः
प्राक्कुंडेग्रहादिद्वात्रिंशद्देवताभ्यस्तत्तन्मन्त्रैर्घृताक्ततिलैःपृथक्यवघृताभ्यांमीलिताभ्यांकुशैश्चेतित्रिभिःसाधनैःप्रत्येकमष्टवारंहुत्वादशलोकपाले
भ्योष्टवसुभ्यएकादशरुद्रेभ्योद्वादशादित्येभ्यश्चप्रत्येकमष्टाष्टसंख्ययासमिच्चर्वाज्याहुतिभिर्जुहुयुः ।। ततःपुरुषसूक्तेनब्रह्मविष्णुरुद्रेभ्यःसमित्तिलै-
र्वासूर्यकामंदेवधनदस्सकामधेनुभ्यस्तिलैर्घृतेनवाअष्टोत्तरशतंजुहुयुः ।। ततस्ततःपंचाशद्देवताभ्यस्तिलैर्घृतेनचेति ।। ततोयजमानोमेरुमवरु-
ह्यपूजयेत् ।। तत्रमन्त्रः ।। त्वंसर्वदेवगणधामनिधिर्विरुद्धमस्मद्गृहेष्वमरपर्वतनाशयाशु ।। क्षेमंविधत्स्वकुरुशांतिमनुत्तमांनःसंपूजितपरम-
पाहिसमातनस्त्वम् ।। त्वमेवभगवानीशोब्रह्माविष्णुर्दिवाकरः ।। मूर्तामूर्तपरंबीजमतःशांतिंकुरुप्रभो ।। यस्मात्त्वंलोकपालानांविश्वमूर्तेश्चमं-
दिरम् ।। रुद्रादित्यवसूनांचततःशांतिंप्रयच्छमे ।। यस्मादशून्यममरैर्नारीभिश्चशिरस्तव ।। तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ।।

मंदरस्यत् ॥ यस्माच्चैत्ररथेनत्वंभद्राश्वप्रमुखेनच ॥ शोभसेमंदरक्षिप्रमलंपुष्टिकरोभव ॥ ॥ गन्धमादनस्यत् ॥ यस्माच्चूडामणिर्जंबूद्वीपे
त्वंगन्धमादन ॥ गन्धर्ववनशोभावानतःकीर्तिर्दृढास्तुमे ॥ ॥ विपुलस्यत् ॥ ॥ यस्मात्वंकेतुमालेनवैभ्राजेनवनेनच ॥ हिरण्मयाश्वयात्थ्य-
शिरास्तथापुष्टिर्दृढास्तुमे ॥ सुपार्श्वस्यत् ॥ उत्तरैःकुरुभिर्यस्मात्सावित्रेणवनेनच ॥ सुपार्श्वशोभसेनित्यमतःश्रीरक्षयास्तुमे ॥ ततःसर्वेर्जा-
गरणोक्तेप्रस्नातःस्नात्वाकृतनित्यक्रियःकुण्डसमीपस्थकलशजलेनसपरिवारंयजमानमभिषिंचेयुः ॥ ततोयजमानोगृहीतकुसुमोमेरुंप्रदक्षिणी-
कृत्योपतिष्ठेत् ॥ अन्नंब्रह्मरसःप्रोक्तमन्नेप्राणाःप्रतिष्ठिताः ॥ अन्नाद्भवन्तिभूतानिजगदन्नेनवर्द्धते ॥ अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः ॥
धान्यपर्वतरूपेणपाहितस्मान्नमोनमः इत्युपस्थायपुष्पांजलिंप्रक्षिप्यनमस्कृत्यप्राङ्मुखोपविश्योदङ्मुखेभ्योगुर्वादिभ्यःक्रमेणगिरीन्दद्यात् ॥

अद्येत्यादि० गोत्रायशर्मणेसालंकृतायगुरवेअप्सरोगंधर्वयुतविमानकरणकस्वर्गलोकगमनानन्तरंसाग्रमन्वन्तरशतावधिसमयदेवलोकनिवासोत्त
रभूलोकराजराजत्वप्राप्तिकामइमंधान्यमयमेरुंसौवर्णमंदरादिवृक्षपंचकसौवर्णब्रह्मविष्णुरुद्रार्कादिप्रतिमायुक्तंमुक्ताहीरकादिभूषितंरौप्यशृङ्ग-
चतुष्कशोभितंरूप्यमयेन्द्रादिदशलोकपालप्रतिमायुतंरौप्यमयनितंबान्वितंइक्षुवंशमितकंदरदिक्चतुष्टयस्थापितरौप्यपात्रस्थितघृतोदकप्रस्रव-
णादिक्चतुष्टयस्थापितकर्पूररक्तवस्त्रांबुदधरंनानाफलमाल्यवितानाद्युपकरणसहितंतुभ्यमहंसंप्रददेनममेतिदद्यात् ॥ चतुर्विंशतिधेनुपक्षेगावो
द्वौगुरवे ॥ चतस्रस्रतुरृत्विग्भ्यः ॥ दशपक्षेतुगुरवेषट्ऋत्विग्भ्यःएकैका ॥ एकधेनुपक्षेगुरवेएकामेवकपिलाम् ॥ ऋत्विग्भ्यःसुवर्णंदक्षि

णांदद्यादितिमदनरत्नादयः ॥ एवंपूर्वस्थितमंदराख्यंविष्कंभंसप्रतिमंसोपस्करंगोचायशर्मणेऋत्विजेतुभ्यमहंसंप्रददेनममेतिदद्यात् ॥ एवमे-
वदक्षिणस्थगोधूममयंगंधमादनपर्वतम् ।। तथापश्चिमस्थन्तिलमयंविपुलाख्यम्पर्वतम् ॥ ततउत्तरदिक्स्थंमाषमयंसुपार्श्वनामाख्यंपर्वतंऋ-
त्विग्भ्योदद्यात् ।। लवणाचलादिदानप्रयोगेषुधान्यपदस्थानेलवणादिपदंप्रक्षेप्यम् ॥ तत्तत्फलानितुतत्रतत्रवक्ष्यामः ।। ततोग्रहवेद्यांयज-
मानोदेवताःसंपूज्याहितदेवताश्चसंपूज्यनमस्कुर्यात् ॥ गुरुस्तासांदेवतानांविसर्जनंकुर्यात् ॥ ततोयजमानोमण्डपग्रहपीठंप्रतिमोपस्करादिसर्वं-
गुरवेप्रतिपाद्यभूयसींदत्वा ॥ प्रमादात्कुर्वतां० ॥ यस्यस्मृत्येतिचविष्णुंस्मृत्वाकर्मेश्वरार्पणंकृत्वाब्राह्मणान्भोजयित्वाशिषोगृहीत्वास्वयंसुहृद्यु-
क्तोभुंजीतेति ॥ इतिधान्यमेरुपर्वतसाधारणप्रयोगः ॥ ॥ अथलवणाचलदानम् ॥ पाद्मे ॥ उत्तमःषोडशद्रोणःकर्त्तव्योलवणाचलः-
मध्यमःस्यात्तदर्द्धेनचतुर्भिरधमःस्मृतः ॥ वित्तहीनोयथाशक्त्याद्रोणादूर्ध्वंतुकारयेत् ॥ चतुर्थांशेनविष्कंभपर्वतान्कारयेत्पृथक् ॥ अयंन्यायः-
सर्वविष्कंभपर्वतेषुज्ञेयःइतिमदनः ॥ विधानन्तुपूर्ववत् ॥ हेमतरून्लोकपालान्कामदेवादीन्पूर्ववत् ॥ तथैवसंपूज्यप्रार्थयेत् ॥ मन्त्रास्तु ॥
सौभाग्यरससंभूतोयतोयंलवणोरसः ॥ तदात्मकत्वेनचमांपाहिपापान्नमोनमः ॥ यस्मादन्यरसाःसर्वेनोत्कृष्टालवणंविना ॥ प्रियंचशिवयोर्नि-
त्यंतस्माच्छान्तिंप्रयच्छमे ॥ विष्णुदेहसमुद्भूतंयस्मादारोग्यवर्धनम् ॥ तस्मात्पर्वतरूपेणपाहिसंसारसागरात् ॥ अद्येत्यादि०कल्पपर्यंतंउमालो
कप्राप्त्यनन्तरंपरमगतिप्राप्तिकामईश्वरप्राप्तिकामोवालवणाचलदानङ्करिष्येइतिसङ्कल्पः ॥ अयमेवविशेषोन्यत्सर्वंपूर्ववत् ॥ इतिलवणाचल

दनम् ॥ ॥ अथगुडाचलदानम् ॥ पाद्मे ॥ अथातःसंप्रवक्ष्यामिगुडपर्वतमुत्तमम् ॥ यत्प्रदानान्नरःस्वर्गंप्राप्नोतिसुरपूजितम् । उत्त-
मोदशभिर्भारैर्मध्यमःपंचभिर्मतः ॥ त्रिभिर्भारैःकनिष्ठःस्यात्तदर्धेनाल्पवित्तवान् ॥ तुलाद्वियांपलाशतंभारस्याद्विंशतिस्तुलाइत्यमरः ॥
विधिस्तुपूर्ववत् ॥ प्रार्थनामन्त्रास्तु ॥ यथादेवेषुविश्वात्माप्रवरस्तुजनार्दनः ॥ सामवेदस्तुवेदानांमहादेवस्तुयोगिनाम् ॥ प्रणवःसर्वमन्त्राणां
नारीणाम्पार्वतीयथा ॥ तथारसानांप्रवरःसदैवेक्षुरसोमतः ॥ ममतस्मात्परांलक्ष्मींददस्वगुडसर्वदा ॥ यस्मात्सौभाग्यदायिन्याभ्राताद्वंगुड-
पर्वत । निवासश्चापिपार्वत्यास्तस्मान्मांपाहिसर्वदा । दानवाक्यंतु । अद्येत्यादि॰सकलपापक्षयोत्तरगन्धर्वपूज्यमानत्वपूर्वककल्पशतावधिगौरीलो-
कप्राप्त्यनन्तरसपत्नापराजितायुतायुरारोग्यपूर्वकसप्तद्वीपाधिपतित्वकामईश्वरप्रीतिकामोवेतिसंकल्पेदानेचविशेषोन्यत्सर्वंपूर्ववदिति ॥ इति
गुडाचलदानम् ॥ ॥ अथसुवर्णाचलदानम् ॥ पाद्मे । उत्तमःपलसाहस्रोमध्यमःपंचभिःशतैः ॥ तदर्द्धेनाधमस्तद्वदल्पवित्तोपिशक्तितः
अल्पवित्तःपलादर्ध्वंकुर्यादिति ॥ धान्यपर्वतवद्विधानम् ॥ पर्वतंसंपूज्यप्रार्थयेत् ॥ मन्त्रौतु ॥ नमस्तेब्रह्मगर्भायब्रह्मबीजायवैनमः ॥
यस्मादनन्तफलदःतस्मात्पाहिशिलोच्चय ॥ यस्मादग्नेरपत्यत्वंयस्मात्तेजोजगत्पतेः ॥ हेमपर्वतरूपेणतस्मात्पाहिसदाममेति ॥ दानवाक्यम् ॥
अद्येत्यादि॰सकलपापक्षयोत्तरशतकल्पावधिआनंदकारकब्रह्मलोकभोगानन्तरपरमपदप्राप्तिकामइतिसङ्कल्पेदानवाक्येचविशेषः ॥ अत्रसर्वं-
गुर्वादिभ्यएवदेयम् ॥ तदल्पद्रव्यविषयम् ॥ बहुद्रव्येषुतुलापुरुषदानवदष्टसुतुर्थांशंवागुरवेदत्वान्यद्विप्रेभ्योदेयमितिहेमाद्रिः ॥ इति-

सुवर्णाचलदानम् ॥ ॥ अथतिलाचलदानम् ॥ पाद्मे ॥ उत्तमोदशभिर्द्रोणैः पंचभिर्मध्यमोमतः ॥ त्रिभिःकनिष्ठोराजेंद्र तिलशैलःप्रकीर्तितइति ॥ इत्तविष्कम्भादित सर्वम्पूर्ववत् ॥ मन्त्रास्तु ॥ यस्मान्मधुवनेविष्णोर्देहस्वेदसमुद्भवाः ॥ तिलाःकुशाश्चमाषाश्चतस्मात्छन्नोभवत्विह ॥ हव्यकव्येषुयस्माच्चतिलैरेवाभिरक्षणाम् ॥ भवादुद्धरशैलेन्द्रतिलाचलनमोस्तुते ॥ दानवाक्यंतु ॥ अद्येत्यादि० सकलपापक्षयदीर्घायुष्यपचपौत्रसमन्वितानन्तरपितृदेवगंधर्वपूर्वकपज्यमानत्वपूर्वकध्रुलोकगमनानन्तरमन्त्येयत्रवैष्णवपदप्राप्तिकामइतिसङ्कल्पेदानवाक्येचविशेषोन्यत्सर्वम्पूर्ववत् ॥ इतितिलाचलदानम् ॥ अथार्द्धोदयव्रतेतिलपर्वदानम् ॥ स्कांदे ॥ पर्वाह्लेसङ्क्रमेस्नात्वाशुभिर्भूत्वासमाहितः ॥ सर्वपापविशुद्ध्यर्थंनियमस्थोभवेन्नरः ॥ नियममन्त्रस्तु ॥ त्रिदैवत्यव्रतंदेवाःकरिष्येभुक्तिमुक्तिदम् ॥ भवन्तुसन्निधौमेद्यत्रयोदेवास्त्रयोग्नयइति ॥ तथा ब्रह्मविष्णुमहेशानांसौवर्णीःपलसंख्यया ॥ प्रतिमास्तुप्रकर्तव्यास्तदर्द्धेनद्विजोत्तम ॥ साग्रशतत्रयंशुभेद्रोणानान्तिलपर्वतः ॥ कर्त्तव्यःपर्वतोविष्णोर्ब्रह्मणःपूर्वसंख्यया ॥ शयात्रयंततःकुर्यादुपस्करसमन्वितम् ॥ संपूज्यविप्रत्रयेभ्योदत्वेप्सितमवाप्नुयादिति ॥ अथास्यदानप्रयोगः ॥ यजमानःकृतनित्यक्रियःपुण्यकालेतीर्थादौस्नात्वाचम्यअद्येत्यादिममे॰ सितफलावाप्तयेमेरुदानसमफलावाप्तयेवार्द्धोदयेतिलपर्वतदानङ्करिष्यइतिसङ्कल्प्यत्रवेदपारगान्ब्राह्मणान्वृत्वायथाविभवंवस्त्रालङ्कारादिभिःसंपूज्यततस्तिलपर्वतेब्रह्मादीनांप्रतिमाःस्वर्णमयाःसंस्थाप्यषोडशोपचारैःसंपूज्यब्रह्मादीनामंगपूजांकुर्यात् । तद्यथा । नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने । देवायदेवपतयेयज्ञानाम्पतयेनमः ॥ ओंब्रह्मणेनमःपादौपू

इत्यक्षतगंधपुष्पाणिचप्रक्षिपेत् ।। ओंहिरण्यगर्भाय० उरू० ओंपरमात्मने० जानुनीपूज० ओंवेधसे० जंघे० ओंपद्मोद्भवाय० गुह्यं० ओंहंसवाहनाय कटींप० ओंशतानंदाय० वक्षः० ओंसावित्रीपतयेन० बाहून्पू० ओंऋग्वेदाय० पूर्ववक्त्रं० ओंयजुर्वेदाय० दक्षिणवक्त्रं० ओंसामवेदायनमः पश्चिमवक्त्रंपू० ओंअथर्वणवेदाय० उत्तरवक्त्रं० ओंचतुर्वक्त्राय० वक्त्राणिपू० ओंहंसाय० नेत्राणि० ओंकमलासनाय० शिरांसि० ओंलोकेशाय० सर्वाङ्गंपूजयामि ॥ ।। ततोलोकपालान्परितस्तत्तन्मन्त्रैःपूजयेत् ।। ततोविष्ण्वङ्गपूजा ।। हिरण्यरूपपरूपप्रधानाव्यक्तरूपधृक् ।। प्रसीदसुमुखानंतपूजांगृहाणमत्कृतामितिसंप्रार्थ्यपजयेत् ।। ओंअनंतायनमःपादौपूजयामि ओंविश्वरूपवते० उरू० ओंमुकुंदाय० जानुनी० ओंगोविंदाय० जंघे० ओंप्रद्युम्नाय० गुह्यं० ओंपद्मनाभाय० नाभिं० ओंलंबोदराय० उदरं० ओंकौस्तुभवक्षसे० वक्षः० चतुर्भुजाय० बाहू० ओंविश्वमुखाय० मुखं० ओंसहस्रशिरसे० शिरांसि० ओंसर्वेश्वरायनमः सर्वाङ्गंपूजयामि ।। ।। ततःशिवाङ्गपूजा ।। आदित्यचन्द्रनयनदिग्वासोदैत्यसूदन ।। पूजांदत्तांमयाभक्त्यागृहाणकरुणाकरेति ।। तथा ।। महेश्वरमहेशाननमस्तेत्रिपुरांतक ।। जीमतकेशायनमोनमस्तेवृषभध्वजेतिआयमन्त्रेणसंप्रार्थ्यद्वितीयेननत्वापूजयेत् ।। ओंईशानायनमः पादौपूजयामि ओंशङ्कराय० उरू० ओंउमाकांताय० गुह्यं० ओंनीललोहिता० नाभिं० ओंकृत्तिवाससे० उदरं० ओंनागयज्ञोपवीतिने० बाहू० ओंपंचवक्त्राय० वक्त्राणि० ओंत्रिलोचनाय० नेत्राणि० ओंरुद्राय० शिरः० ओंविश्वेश्वरायनमःसर्वांगंपूजयामि ।। ।। ततःपंचामृताद्युपचाराः ।। पीठत्रयंकमंडलुंश्वेतवस्त्रयुगंब्रह्मणेपीतांबरद्वयंविष्णवेलोहितव-

स्वयुगंशंकराय ॥ कमलैस्तुलसीपत्रैर्बिल्वपत्रैश्चक्रमेणसंपूज्यततोब्रह्मविष्णुशिवानांनाममन्त्रेणाष्टोत्तरशतंतिलैर्घृताक्तैर्हुत्वागामेकांदद्यात् ।
ततस्तिलपर्वतंप्रतिमात्रयंशय्यात्रयंचदद्यात् ॥ सङ्कल्पोक्तफलंसंकीर्त्यगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रौतु ॥
यस्मान्मधुवनेविष्णोर्देहस्वेदसमुद्भवाः ॥ तिलाःकुशाश्चमाषाश्चतस्माच्छन्नोभवत्विह ॥ हव्यकव्येषुयस्माच्चतिलैरेवाभिरक्षणम् ॥ भवादुद्ध-
रशैलेन्द्रतिलाचलनमोस्तुते ॥ अन्यत्सर्वंत्तिलाचलदानवत्कुर्यात् ॥ यत्किंचिद्दीयतेदानंमेरुतुल्यंतुतद्भवेदिति ॥ तथाचात्रदानविशेषोनिर्णा-
यामृतेस्कांदे ॥ चतुःषष्टिपलंमुख्यममत्रन्त्वकारयेत् ॥ तत्रश्रृंद्वोदये ॥ चत्वारिंशत्फलंवापिपंचविंशतिमेववा ॥ तत्तुकांस्यमयमुक्तंतत्रैव ।
यवंसुघटितंकार्यंकांस्यभाजनमुत्तममिति ॥ स्कांदे ॥ निधायपायसंतत्रपद्ममष्टदलंलिखेत् ॥ पद्मस्यकर्णिकायांतुकर्षमात्रंसुवर्णकम् ॥
तदभावेतदर्धंवातदर्धंवापिकारयेत् ॥ कृत्वातुतंदुलैःशुक्लैःपद्ममष्टदलंभुवि ॥ अमत्रंस्थापयेत्तत्रब्रह्मविष्णुशिवात्मकम् ॥ तेषांपजाततः-
कार्यश्वेतमाल्यैस्तुशोभनैः ॥ वस्त्रादिभिरलंकृत्यब्राह्मणायनिवेदयेदिति ॥ अद्येत्यादि ० ससमुद्रसमग्रसम्यक्पृथ्वीदानसमफलावाप्तिकामो-
गोत्रायशर्मणेसालंकृतायइदंपायसपूरितकांस्यपात्रअष्टदलपद्मस्थितंससुवर्णंवस्त्रादिभिरलंकृतंब्रह्मविष्णुशिवात्मकंविष्णुदैवत्यंतुभ्यमहंसंप्रददे-
नममेति ॥ मन्त्रस्तु ॥ सुवर्णपायसंमत्रंयस्मादेतत्त्रयीमयम् ॥ आवयोस्तारकंयस्मातद्गृहाणद्विजोत्तमेति ॥ कांस्यपात्रदानफलमुक्तंस्कांदे ।
समुद्रमेखलांपृथ्वींसम्यक्दातुश्चयत्फलम् ॥ तत्फलंलभतेमर्त्यःकृत्वादानममत्रकमिति ॥ अमलम्पात्रम् ॥ इत्यर्द्धोदयेतिलाचलदानंकांस्य-

पावदानंच ॥ ॥ अथकार्पासाचलदानम् ॥ कार्पासपर्वतस्तद्वद्विंशद्भारैरिहोदितः ॥ दशभिर्मध्यमः प्रोक्तः कनिष्ठः पंचभिः स्मृतः ॥ अल्प
वनोभारैकेणवाकुर्यात् ॥ विधिस्तुधान्यपर्वतवत् ॥ दानंतुप्रभातायांशर्वर्यांअरुणोदयेसूर्योदयात्प्राकनाडिकाचतुष्टयमध्येइत्यर्थः ॥ अद्ये-
त्यादि० सकलपापक्षयोत्तराकल्पावधिरुद्रलोकनिवासानंतरभूलोकराज्यत्वकामइतिसंकल्प्यदानवाक्येचवदेत् ॥ मन्त्रस्तु । त्वमेवावरणंयस्मान्लो-
कानामिहसर्वदा ॥ कार्पासाचलतस्मात्त्वमघौघध्वंसनोभवेति ॥ इतिकार्पासाचलदानम् ॥ ॥ अथघृताचलदानम् ॥ पाद्मे ॥ विंशत्या-
घृतकुम्भानामुत्तमः स्याद्घृताचलः मध्यमस्तदर्द्धेनतदर्द्धेनाधमः स्मृतइति ॥ अल्पवित्तस्तुद्वाभ्यांवापिकुर्वीतेतिविष्कम्भादिपर्वताश्चतुर्थांशेनका-
र्याः ॥ कुम्भः पलसहस्रात्मकइत्युक्तंदानविवेके ॥ घृतकुंभः पात्रएव ॥ शालितंदुलपूर्णपात्राणिकुंभानामुपरिनिवेशयेत् ॥ अहतशुक्लवस्त्रै
राबेष्टयेत् ॥ इक्षुदण्डफलान्वितः ॥ अन्यत्सर्वंधान्यपर्वतवद्बोध्यम् ॥ उदयात्प्राकघटिकाचतुष्टयमध्येदद्यात् । अद्येत्यादि- सकलपापक्षयपू
र्वकहंससारसयुक्तकिंकिणीजालमाल्यर्कवर्णविमानकरणशङ्करलोकगमनपूर्वकसिद्धचारणादिविद्याधराचितत्वविशिष्टपितृसहिताभूतसंप्लवावधि-
कविचरणकामइतिसङ्कल्प्यदानवाक्येचवक्तव्यम् ॥ मन्त्रौतु ॥ संयोगाद्घृतमुत्पन्नंयस्मादमृततेजसः ॥ तस्माद्घृताचविश्वात्माप्रीयतामस्यशङ्करः ॥
यस्मात्तेजोमयंब्रह्मघृतेनचप्रतिष्ठितम् ॥ घृतपर्वतरूपेणतस्मात्त्वंपाहिभूधरेति ॥ इतिघृताचलदानम् ॥ ॥ अथरत्नाचलदानम् ॥ पाद्मे
अथातःसंप्रवक्ष्यामिरत्नाचलमनुत्तमम् ॥ मुक्ताफलसहस्रेणपर्वतःस्यादिहोत्तमः ॥ मध्यमःपंचशतिकस्त्रिशताचाधमःस्मृतः ॥ चतुर्थांशेनवि-

ष्कंभादयः ॥ वज्रगोमेदैःपूर्वेमंदरः ॥ इन्द्रनीलैःपद्मरागयुतैःदक्षिणेगंधमादनः ॥ वैडूर्यविद्रुमैःपश्चाद्विपुलाचलः ॥ ससौवर्णैःपद्मरागैः-
सुपार्श्वउत्तरइति ॥ दानवाक्यन्तु ॥ अद्येत्यादि० अनेकजन्मकृतब्रह्महत्यादिपापक्षयोत्तरामरेश्वरपूजितत्वपूर्वकसाग्रकल्पशतावधिविष्णु
लोकनिवासानंतरंआयुरारोग्यरूपगुणोपेतसप्तद्वीपाधिपत्यकामइतिसंकल्पेदानवाक्येचवक्तव्यम् ॥ मन्त्रौतु ॥ यथादेवगणाःसर्वेरत्नेष्वेवव्य-
वस्थिताः ॥ त्वंचरत्नमयोनित्यमतःपाहिसदाचल ॥ यस्माद्रत्नप्रसादेनतुष्टिंप्रकुरुतेहरिः । रत्नाचलप्रदानेनतस्मान्नःपाहिपर्वतइति ॥ अ-
न्यत्सर्वंधान्यपर्वतवत् ॥ इतिरत्नाचलदानम् ॥ ॥ अथरौप्याचलदानम् ॥ पाद्मे ॥ दशभिःपलसाहस्रैरुत्तमोरजताचलः ॥ पंचभि-
र्मध्यमःप्रोक्तस्तदर्धेनाधमःस्मृतः ॥ अत्यशक्तौविंशतिपलादूर्ध्वंकुर्यात् ॥ विष्कंभादयस्तुतुरीयांशेनेति ॥ अन्यत्सर्वंधान्यपर्वतवत् ॥ दानवा-
क्यंतु ॥ अद्येत्यादि० सकलपापक्षयपूर्वकदशसाहस्रगोदानसमफलावाप्तिपूर्वकगंधर्वाप्सरोगणपूज्यमानत्वविशिष्टवैभवेनयावदाभूतसंप्लवसोम
लोकनिवासकामइतिसंकल्पेदानवाक्येचवक्तव्यम् ॥ मन्त्रस्तु ॥ पितॄणांवल्लभंयस्माद्धरीन्द्रोःशङ्करस्यतु । रजतम्पातुतस्मान्नःशोकसंसारसा-
गरादिति ॥ इतिरौप्याचलदानम् ॥ ॥ अथशर्कराचलदानम् ॥ पाद्मे ॥ अष्टभिःशर्कराभारैरुत्तमःस्यान्महाचलः ॥ चतुर्भिर्मध्यमः
प्रोक्तस्तदर्धेनाधमःस्मृतः ॥ भारेणाह्यल्पवित्तोपिभारार्द्धेनापिवापुनः ॥ चतुर्थांशेनविष्कम्भादयः ॥ मंदारपारिजातकल्पवृक्षादयोहैमाएव-
पूर्ववत् ॥ पूर्वपश्चिमेहरिचंदनसन्तानौ ॥ प्रत्यङ्मुखोकामदेवोमंदरे ॥ धनदउदङ्मुखोगन्धमादने ॥ प्राङ्मुखावेदमूर्तिर्विपुलाचले ॥

हैमीसुपार्श्वेदक्षिणामुखीसुरभी ॥ अन्यत्सर्वं धान्यपर्वतवत् ॥ अद्येत्यादि॰सकलपापक्षयानन्तरं कल्पशतावधि विष्णुलोकनिवासानंतर सप्तद्वीपाधिपत्योत्तरं जन्मायुतयावदच्छिन्नायुरारोग्यकामइतिसंकल्प्यदानवाक्यंचवक्तव्यम् ॥ मन्त्रस्तु । आरोग्यामृतसारोयंपरमःशर्कराचलः । तन्ममानंदकारीत्वंभवशैलेन्द्रसर्वदा अमृतम्पिवतांयेतुनिपेतुर्भुविशीकराः । देवानांतत्समुत्थोयंपाहिनःशर्कराचलः । मनोभवधनुर्मध्यादुद्गताशर्करायतः तन्मयोसिमाहाशैलपाहिसंसारसागरादिति सर्वत्रब्राह्मणभोजनंशक्त्याकार्यमेव । तदापूर्वेद्युःकृतोपवासःपरेद्युर्दानानन्तरमक्षारलवणंभुंजीत एवंप्रसन्नचित्तोदानंदद्यादिति ॥ इतिशर्कराचलदानम् ॥ इतिदशाचलदानानि ॥ ॥ अथशिखरदानानि ॥ विष्णुधर्मे ॥ गुडेक्षवस्त्रलवणधान्यकाजाजिशर्करा ॥ खर्जूरतंडुलद्राक्षाक्षौद्रमलयजेनच ॥ फलैर्मनोहरैरम्यैःशिखराणिप्रदापयेत् ॥ माघेमार्गशीर्षेवैशाखेरोहिणीयुतायांतृतीयायांप्रोष्टपदशुक्लतृतीयायांचदद्यात् ॥ शिखरप्रमाणंतुआत्मसमप्रमाणम् ॥ प्रादेशाभ्यधिकंशरीरार्धप्रमाणंसप्रादेशंशरीरप्रमाणम्वा ॥ अथास्यदानप्रयोगः ॥ उक्तकालेयजमानःकृतनित्यक्रियःपर्वान्हे ॥ अद्येत्यादि दुःखदौर्भाग्यत्वाभावपूर्वककल्पकोटिशतत्रयावच्छिन्नगौरीभवननिवासानन्तरंपृथ्वीपतिकामस्त्वःश्वोगुडशिखरदानमहंकरिष्यइतिसङ्कल्प्यगणेशपूजनादिनांदीश्राद्धान्तंकृत्वाआचार्यवरणादियथाविभवम्वस्त्रालङ्कारादिभिर्मधुपर्कपूजांतंकृत्वागोमयेनोपलिप्तायांभुविदूर्वाक्षुपचाण्यास्तीर्यमूलेद्विहस्तमाविस्तारंउपरिहस्तमात्रविस्तारंदृक्षुदलमयकुसुलंकृत्वातदभ्यन्तरेरक्तवस्त्रेणावेष्टयगुडादिदेयद्रव्येणापूर्यउपरिइक्षुपत्रकटमास्तीर्यतत्क्षौमादिवस्त्रोपरिशंखंदर्वर्णाभांचन्द्रमौलिंप-

द्मासनाचस्रुचकमण्डलुवरदाऽभयकरांहैमींगौरींसशिखरांस्ववेणाभिष्ट्वकुंकुमादिनापूजयेत् ॥ ॥ अथाङ्गपूजा ॥ ॐभवान्यैनमःपादौ-
पूजयामि ॐकामिन्यै० जानुनी० ॐकामदेव्यै० उरू० ॐजगाच्छ्रियै० नाभिं० ॐअनंदायै० हृदयं० ॐनंदायै० स्तनौ० ॐशस्त्रास्त्रधारिण्यै०
बाहून्० ॐशितिकण्ठायै० कण्ठं० ॐसुमुखायै० मुखं० ॐललितायै० शिरः० ॐत्रिलोचनायै० नेत्राणि० ॐचन्द्रशेखरायै० भालं० ॐसर्वा
त्मकायैनमःसर्वाङ्गंपूजयामि ॥ इत्यङ्गपूजा ॥ ततोंजलिनापुष्पाण्यादायप्रदक्षिणीकृत्यपठेत् ॥ यस्मान्निवासःपार्वत्याःशिखरत्वंसुरैर्ष्टतः ॥
तस्मान्मांपाहिभगवन्त्वंगौरीशिखरःसदेति । पुष्पांजलिंसमर्प्यनमस्कृत्यगीतवाद्यनिर्घोषैर्जागरणंकुर्यात् ॥ ततःप्रभातेस्नानादिकृतनित्य-
कृत्यःशिखरपश्चिमभागेप्राङ्मुखउपविश्य ॥ अद्येत्यादि० सङ्कल्पोक्तफलंसंकीर्त्यगोत्रायशर्मणेइदंगुडशिखरंगौरीप्रतिमासहितंसोपस्करंतु-
भ्यमहंसंप्रददेनममेतिदद्यात् ॥ ततःसुवर्णदक्षिणांदद्यात् ॥ भूयसींचदत्वाब्राह्मणान्संभोज्यतद्दिनेक्षीरंघृतंवावाग्यतोमुक्ताकेशस्तूष्णींप्राश्नी-
यात् ॥ इक्षुवस्त्रादिशिखरदानेतुतत्तद्द्रव्येणकुम्भलपूरणंसङ्कल्पादौतत्तत्पदंतत्रतत्रवक्तव्यमितिशेषः ॥ अन्यत्सर्वंपूर्ववदिति ॥ इतिगुड-
शिखरदानम् ॥ इतिनानाशिखरदानानि ॥ ॥ अथसमस्तपापक्षयकरंत्रिशूलदानङ्कर्मविपाकसारे ॥ श्रुताध्ययनसम्पन्नंपावितारमकि-
चनम् ॥ ब्राह्मणंदान्तमाहूयदानार्थंनददातियः ॥ मनुष्यानांहिंसकश्चजठरेशूलवान्भवेत् ॥ वायुपुराणे ॥ कृष्णपक्षेचतुर्दश्यामष्टम्यांवा-
सितेतरे ॥ कुर्याद्वादशनिष्केणत्रिशूलंलक्षणान्वितम् ॥ सुवर्णमानंतु ॥ निष्कचतुष्कःसौवर्णिकःषट्पंचाशदधिकशतद्वयपलमूल्योवा ।

नाभौनिधायसंपर्णातिलानांताम्रनिर्मितम् ॥ पात्रमाढकमानंस्यात्तत्त्रिशूलंन्यसेत्पुनः ॥ ततःशैवपंचाक्षरेणरुद्रप्रकाशकवैदिकमंत्रेणत्रिशूला-
यनमइतिनाममंत्रेणवात्रिशूलंसंपूज्यहैमंविरूपाक्षंकमलोपरिसंपूज्य ॥ अघोरेभ्यइतिमंत्रेणपूजांतेप्रणिपत्य ॥ ततोविप्रंदृष्ट्वायथाविभवंवस्त्राल-
ङ्कारादिभिःसंपूज्य ॥ अद्येत्यादि० ममबुद्धबुद्धिपूर्वककायवाङ्मनःकृतकर्माद्याजन्मार्जितान्यजन्मोपार्जितमनुष्यहिंसनदानार्थाकृतब्राह्मण
निराकरणजन्योदरशूलजनितपीडापनोदकामइमंस्वर्णमयत्रिशूलंविरूपाक्षप्रतिमायुतंसोपस्करंगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनम-
मेति ॥ मन्त्रास्तु ॥ भगवन्भगनेत्रघ्नदक्षयज्ञप्रमर्दन ॥ तवायुधप्रदानेनपापंनश्यतुशङ्कर ॥ युगांतेयेनलोकानांत्वमंतकविनाशनःविदग्धं-
यत्स्वपापेनपापोघंचव्यपोथययेनदग्धंत्वत्त्वणार्द्धेनत्रिपुरंसुरदुर्जयम् ॥ तेनपाशुपतेनाशुममशूलंविनाशय ॥ यदाबुद्धिकृतंपापंमनोवाक्कायमान-
सम् ॥ तत्सर्वंक्षयमेवाशुशूलदानप्रभावतइति ॥ ततःसुवर्णपरिमितांदक्षिणांदत्वाद्विजभोजनसङ्कल्पंविधायभूयसींदत्वाकर्मेश्वरार्पणंकुर्यात्
इतित्रिशूलदानम् । ॥ अथदारिद्र्यहरंकुबेरमूर्तिदानम् ॥ वायवीये ॥ दारिद्र्योजायतेमर्त्योदानविघ्नंकरोतियः ॥ ऐश्वर्यंजायतेयेनक
र्मणातच्छृणुष्वमे ॥ पलार्द्धेनतदर्द्धेनचतुर्थांशेनवापुनः ॥ अत्रसार्द्धमाषद्वयादारभ्यपंचाशन्माषावधिवावित्तशाठ्यराहित्येनपुष्पकविमान-
स्थांकुबेरमूर्त्तिंपार्श्वयोःपद्मशङ्खाकारयुतांकृत्वाशुभेन्हिअद्येत्यादि० ममेहजन्मनिपूर्वजन्मनिवादानविघ्नजनितदारिद्र्यविनाशपूर्वकयथेप्सितध
नप्राप्त्यर्थंकुबेरमूर्त्तिदानङ्करिष्येइतिसङ्कल्प्य ॥ गोमयोपलिप्तेदक्षिचतुरेकद्रोणतंदुलराशौकुबेरप्रतिमांराजाधिराजेतिसंपूज्यततआग्नेयांस्व

गृह्यविधिनाग्निं प्रतिष्ठाप्य समिदाज्यचरुभिः प्रत्येकमष्टोत्तरशतं राजाधिराजायेति मंत्रेण हुत्वा तत्संख्यया घृताक्ततिलैर्व्याहृतिभिश्च हुत्वा कुबेरमूर्तिं-
दद्यात् ॥ अद्येत्यादि मम मे इह जन्मनि जन्मान्तरे वा कृतदानविघ्नजनिततीव्रदारिद्र्यविनाशपूर्वकं यथेप्सितधनप्राप्त्यर्थं च इमां कुबेरमूर्तिं पुष्पकवि-
मानस्थां पार्श्वयोः पद्मशङ्खाकारयुतां सोपस्करां गोत्राय शर्मणे सुपूजितां तुभ्यमहं संप्रददे न मम इति ॥ मन्त्रस्तु ॥ उत्तराशापते देव कुबेर नरवाहन ।
पद्मशंखनिधीनां त्वं पतिः श्रीकण्ठवल्लभः ॥ दानविघ्नान्मया प्राप्तं दारिद्र्यं मम दुःखदम् ॥ तत्सर्वं तव दानेन पापमाशु विनाशयेति ॥ इति दा-
रिद्र्यहरं कुबेरमूर्तिदानम् ॥ ॥ अथ उमामहेश्वरमूर्तिदानम् । भविष्ये ॥ अद्येत्यादि० सशैलवनकाननसप्तसागरपृथ्वीदानसमफला-
वाप्तये इमामुमामहेश्वरमूर्तिं सालंकृतां सोपस्करां सोपकरणां गोत्राय शर्मणे तुभ्यमहं संप्रददे न मम इति ॥ मन्त्रस्तु ॥ शिवशक्त्यात्मकं यस्माज्जगदे-
तच्चराचरम् ॥ तद्दानेन ममैश्वर्या पृथिवी स्यात्सुनिश्चला ॥ सुवर्णं दक्षिणां दद्यात् ॥ इति उमामहेश्वरमूर्तिदानम् ॥ । अथ लक्ष्मीनारा-
यणमूर्तिदानम् ॥ स्कांदे ॥ सङ्कल्पादि पूर्ववत् ॥ मन्त्रस्तु ॥ लक्ष्मीनिवास देवेश शंखचक्रगदाधर ॥ तद्दानात्स्थिरा लक्ष्मीर्मम गेहे स्यात्स-
दाध्रुवम् ॥ सुवर्णं दक्षिणां दद्यात् ॥ इति लक्ष्मीनारायणमूर्तिदानम् ॥ ॥ हरिहरमूर्तिदानम् ॥ सङ्कल्पादि पूर्ववत् ॥ मन्त्रस्तु ।
शिवानां च शिवः साक्षात्तथा नारायणोऽपि च ॥ अस्य दानाद्धरिहरौ प्रसन्नौ स्तां सदा मम ॥ इति हरिहरमूर्तिदानम् ॥ ॥ अथ सूर्यमूर्तिदानम् ।
सूर्यारुणसम्वादे ॥ सङ्कल्पादि पूर्ववत् ॥ मन्त्रस्तु ॥ ग्रहाणामधिपः सूर्यः पद्महस्तप्रभाकरः ॥ दानेनास्य रविर्वायुः शांतिश्रीदः सदा मम ।

सुवर्णंदक्षिणांदद्यात् ॥ इतिसूर्यमूर्तिदानम् ॥ ॥ अथगणपतिमूर्तिदानम् ॥ स्कांदे ॥ यमानमन्तिदेशाद्याविश्वनाथमुमासुतम् ॥
विघ्नेशरत्नप्रचरंतुभ्यंदास्याम्यभीष्टद ॥ इतिसंप्रार्थ्यसङ्कल्पादिकृत्वादद्यात् ॥ मन्त्रस्तु ॥ गणनाथोविघ्नहरोगौरीसूनुरभीष्टदः ॥ अस्य-
दानेनमेशांतिःप्रसन्नोस्तुविनायकइति ॥ इतिगणेशमूर्तिदानम् ॥ ॥ अथजगदम्बिकादानम् ॥ देवीपुराणे ॥ सङ्कल्पादिपूर्ववत् ॥
मन्त्रस्तु ॥ आदिमायामहाशक्तिर्विश्वमाताजगन्मयी ॥ दानेनास्याःप्रसन्नास्तुसर्वदाममशांभवीति ॥ इतिजगदम्बिकादानम् ॥ ॥ अ-
थसरस्वतीमूर्तिदानम् ॥ वायवीये ॥ सङ्कल्पादिपूर्ववत् ॥ मन्त्रस्तु ॥ वीणापुस्तकसंयुक्तावाङ्मूर्तिःसमलंकृता ॥ गृहाणत्वन्द्विजश्रेष्ठवा
क्सिद्धिरस्तुलेममेति ॥ इतिसरस्वतीमूर्तिदानम् ॥ ॥ अथशालग्रामदानम् ॥ हेमाद्रौपाद्मे ॥ शालग्रामशिलाचक्रंयोदद्याद्दानमुत्तमम् ॥
भूचक्रतेनदत्तंस्यात्सशैलवनकाननमिति ॥ अद्येत्यादि०सशैलवनकाननभूचक्रदानसमफलकामइमंशालिग्रामंघंटाशंखादिसोपस्करंणतुलसी-
पत्राद्यर्चितंसवस्त्रकृतताम्रादिपात्रेस्थितंयथाशक्तिसोपस्करंसालंकृतंगोत्रायशर्मणेसालंकृतायतुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ महाकौ-
शनिवासेनचक्राद्यैरुपशोभितः ॥ शालग्रामप्रदानेनममसंतुमनोरथाइति ॥ सुवर्णंदक्षिणासर्वत्रनराजतम् ॥ एवंसङ्कल्पादिसर्वदेवमूर्तिशि
लादानेष्वपियोजनीयम् ॥ मणिःशालग्रामइतिहेमाद्रिणाव्याख्यातम् ॥ घोरप्रतिग्रहेषुचगणितामिति ॥ इतिशालग्रामदानम् ॥
अथशिवनाभिदानम् ॥ लैङ्गे ॥ सङ्कल्पादिपूर्ववत् ॥ मंत्रस्तु ॥ शालग्रामशिलापुण्याभुक्तिमुक्तिप्रदायिनी ॥ शिवनाभेःप्रदानेनपूर्णाःसं-

तुमनोरथाइति ॥ तथा ॥ महाकोशनिवासत्वंशालग्राममहेश्वर ॥ प्रीयतांतवदानेनब्रह्मविष्णुमहेश्वराः ॥ इतिशिवनाभिदानम् ॥
अथलिङ्गदानम् ॥ लैंगे ॥ सङ्कल्पादिपूर्ववत् ॥ मन्त्रस्तु ॥ सालंकारमहालिङ्गनिवासत्वंवृषध्वज ॥ प्रीयतांतवदानेनशिवोगौर्यायुतस्तुम-
इति ॥ तथा ॥ कैलाशवासोगौरीशोभगवान्भगनेत्रभित् ॥ चराचरात्मकोलिङ्गरूपीदिशतुवांछितमिति ॥ रुद्राक्षमालासहितंलिंगंदद्यात् ।
कोटिगुणंपुण्यंभवति ॥ ॥ अथमार्कतलिङ्गदानम् ॥ मंत्रस्तु । इदंमारकतंलिंगंरौप्यपीठसमन्वितम् ॥ धान्यैर्द्वादशभिर्युक्तमेकादशफ-
लान्वितम् ॥ संप्रदद्याद्विधानेनपृथ्वीदानफलंलभेदिति ॥ रुद्राक्षमालायुक्तंसंकल्पाद्युक्तमेव । काश्मीरलिंगदानेतुमारकतपदस्थानेकाश्मी-
रपदंवदेत् ॥ मन्त्रस्तु ॥ मृत्युंजयेशगौरीशस्तनुभ्यांवृषवाहन ॥ संप्रदानेनमेशंभोममसन्तुमनोरथाइति ॥ इतिलिङ्गदानम् ॥ ॥
अथघंटादानम् ॥ पाद्मे ॥ अद्येत्यादिममाकल्पघंटानादश्रवणलोकनिवासावाप्तिकामोगोत्रायशर्मणेसुपूजितायइमांघंटांविष्णुदैवत्यांतुभ्यमहं-
संप्रददेनममेति ॥ मन्त्रस्तु ॥ घंटादेवप्रियानित्यंदैत्यत्रासकरीसदा ॥ संप्रदानेनचैतस्याविजयोस्तुसदाममेति ॥ सुवर्णदक्षिणांदद्यात् ॥
इतिघंटादानम् ॥ ॥ अथशङ्खदानम् ॥ पाद्मे ॥ अद्येत्यादि·गोत्रायशर्मणेइमंशंखंसुपूजितायविष्णुदैवतंतुभ्यमहंसंप्रददेनममेति ॥
मन्त्रस्तु ॥ शङ्खःशुभकरोनित्यंसर्वमङ्गलदायकः ॥ तस्मादस्यप्रदानेनशान्तिरस्तुसदाममेति ॥ सुवर्णदक्षिणां॰ ॥ इतिशङ्खदानम् ॥ ॥
अथकालचक्रदानम् ॥ मृत्युंजयकल्पे ॥ अद्येत्यादिमहामृत्युनिवारणार्थंकालचक्रदानमल्पशक्तितोरौप्यकृतंचंद्राकारमनेकमुक्तामालात्मक-

एभिर्युक्तं कालचक्रं विप्र गंधालङ्कारादिभिः संपूजितं महामृत्युनिवारणकामः तुभ्यमहं संप्रददे न ममेति । मन्त्रस्तु ॥ इदं मे राजतं चक्रं इन्द्ररश्मिसमाकुलम् ॥ अपमृत्युविनाशाय दत्तमायुर्विवृद्धय इति ॥ ततः सुवर्णदक्षिणां दत्वा अग्निं प्रतिष्ठाप्य ओं कालचक्राय नमः स्वाहेत्यनेन मन्त्रेणाष्टोत्तरशतं घृताक्ततिलैर्हुत्वा पायसादिना द्वादश ब्राह्मणान् भोजयित्वा स्वयमक्षारलवणं मध्वाज्यं भुञ्जीतेति ॥ इति कालचक्रदानम् ॥ ॥ अथापरं-अपमृत्युहरं यममूर्तिदानम् ॥ मृत्युंजयकल्पे ॥ लोहपात्रे स्थितं कांस्यं तत्र पद्मं तु राजतम् ॥ तस्मिन्कालेश्वरः स्वर्णैः पुरुषाकारतां गतः ॥ तद्रूपं तु ॥ ईषत्पीतो दण्डहस्तो रक्तादिकपाशहस्तकः । कुद्धो वस्त्रालंकृतः स्याद्रोगिणामभयप्रदः ॥ अलंकृतः स्वर्णालङ्कारैः चित्रोहाकारैर्दूतैर्वृतः चित्रो हं कांस्यं ताम्रमपि चित्तलं व्यय ॥ पुरुषाकारैर्दूतैर्दण्डहस्तैः कृत्वा यमं महिषपृष्ठे अष्टम्यां चतुर्दश्यां वा दद्यात् ॥ दक्षिणा तु घृतपूर्णो घटः सुवर्णं स्वा ॥ एवं कृत्वा दानेन नाशान्मुच्यते ॥ नाशो पमृत्युः ॥ इत्यपमृत्युहरं यममूर्तिदानम् ॥ ॥ अथ कालपुरुषदानम् ॥ भविष्ये ॥ त्रियो निष्कशतं पार्थ दाने ष्वस्मिन्विधिरुत्तमः ॥ मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः इति ॥ अत्यशक्तौ पंचसौवर्णिको वा ॥ ततो ल्पेन तु प्रतिगृहीता-दुःखशोकावहः स्यात् ॥ चतुर्थ्यां च चतुर्दश्यां भद्रायां करणे वा कुर्यात् ॥ कालपुरुषस्वरूपमाह ॥ रौप्यदशनं सुवर्णनेत्रं खड्गोद्यतकरं मांसपिण्डयतवामकरं जपाकुसुमकुण्डलं रक्तवस्त्रं त्वग्विषाणशङ्खमालाधरं छुरिकायुतकटिदेशं अतिदीर्घकृष्णाजिनयुतं निर्माय ॥ अद्येत्यादि० अपमृत्युव्याधिसर्वबाधानिवारणायाहतैश्वर्यप्राप्तिधर्मस्त्रीपुत्रपौत्रादिकर्तृत्वराज्यान्ते परमपदावाप्तिकामः कालपुरुषदानमहङ्करिष्ये इति ॥ कालपुरुषं सं-

पूज्यविभूष्यद्विजंदृष्ट्वायथाविभवंवस्त्रालङ्कारादिभिःसंपूज्यपुष्पांजलिंगृहीत्वापठेत् ॥ सर्वंकलयसेयस्मात्कालस्त्वंतेनचोच्यते ॥ ब्रह्मविष्णुशि-
वादीनांत्वमसाध्योसिसुव्रत ॥ पूजितस्त्वंयथाभक्त्याप्रार्थितश्चयथासुखम् ॥ यद्बध्यतेतत्रविभोतत्कुरुष्वनमोस्तुते ॥ इतिसंप्रार्थ्य ॥ अद्येत्यादि
अपमृत्युव्याधि० इत्यादि राज्यपरमपदावाप्तिकामांतंसंकल्पोक्तवत्फलंसंकीर्त्यगोत्रायशर्मणेसुपूजितायइमंकालपुरुषंमालंकृतंउक्तोपस्करंवि-
ष्णुदैवतंतुभ्यमहंसंप्रददेनममेतिदत्वापंचसुवर्णाद्धर्ध्वमानिष्कशतंदक्षिणांदत्वातंविसृज्यतन्मुखंनेत्रेन्नस्पृशेत्ततःशान्तापृथिवीशिवमन्तरिक्षंइति
जपित्वा ॥ हस्तौपादौप्रक्षाल्यआचम्यभूयसींदक्षिणांदत्वाविप्रान्संभोज्यसुहृद्युतोभुंजीतेति ॥ अनेनविधिनायस्तुदानमेतत्प्रयच्छति ॥ ना-
पमृत्युभयंतस्यनचव्याधिकृतंभयम् ॥ भवत्यव्याहतैश्वर्यःसर्वबाधाविवर्जितः ॥ इतिहेमाद्रौकालपुरुषदानम् ॥ ॥ अथसर्वसम्पत्करदा-
नम् ॥ ब्रह्माण्डपुराणे ॥ सूर्योपरागादिपुण्यकालेदेवालयादिपुण्यदेशेगृहेवाकार्यम् ॥ प्रातस्तिलकुशमिश्रोदकेनस्नात्वाकृतनित्यक्रियः
आचम्यप्राणानायम्याद्येत्यादिसर्वसंपदायुरारोग्यसमस्तपापनाशपुत्रपौत्रादिकुलवृद्धिस्वर्गनिवासमोक्षेष्टसिद्धिकामोमित्रादिंप्रतिमादानमहंक-
रिष्ये ॥ गुरुंदृष्ट्वायथाविभवंवस्त्रालंकारादिभिःपूजयेत् ॥ ततोविंशद्धस्तांचतुरस्रांभुवंगोमयेनोपलिप्यतत्रप्रागायताश्चतस्रउदगायताश्चतस्रो
लेखालिखित्वातेषुनवकोष्ठेषुद्रोणमिततंडुलान्निक्षिप्यतेषुनवकुम्भान्संस्थाप्यवस्त्रैरावेष्ट्यतेषुसुवर्णत्रयादूर्ध्वंपलावधिसुवर्णनिर्मितानवप्रतिमाः
संस्थाप्यपूजयेत् ॥ तत्रपश्चिमपंक्तौउदक्संस्थंमित्रंवरुणंसोमंमध्यपंक्तौब्रह्माणंचतुर्भुजंविष्णुंउमापतिंचान्त्यपंक्तौदिवाकरंइन्द्रहरिणंवह्निंच ॥

ततोऽष्टौ विप्रान् सम्पूज्यैकैकस्मै ॥ अद्येत्यादि सम्पदादिकामांतं सङ्कल्प्योक्तफलमुल्लिख्य गोत्राय शर्मणे सुपूजिताय इमां सिन्नप्रतिमां सुपूजितां तुभ्य महं संप्रददे न ममेति दत्वा ततो वरुणप्रतिमां गुरवे दत्वा देयद्रव्यसमं सुवर्णं दक्षिणां वस्त्रयुगं च दद्यात् ॥ ततः सोमब्रह्मविष्णुशिवदिवाकररुद्रचन्द्रवह्नि प्रतिमाश्च ब्राह्मणेभ्यो दत्वा सुवर्णं दक्षिणां च तेभ्यो दत्वा ब्राह्मणांश्च भोजयित्वा भूयसीं च दत्वा सुहृद्युतो भुंजीतेति ॥ इति सर्वसम्पत्करदानम् ॥

अथ कृष्णाजिनदानम् ॥ सौरपुराणे ॥ कृष्णाजिनं च महिषीमेषीं च दशधेनवः ॥ ब्रह्मलोकप्रदायी स्यात्तुलापुरुष एव चेति मात्स्ये ॥ वैशाखी पौर्णमासी च ग्रहणे शशिसूर्ययोः ॥ पौर्णमासी तु या माघे आषाढी कार्त्तिकी तथा ॥ उत्तरायणं द्वादशी वा तस्यां दत्तं महाफलमिति ॥ अथास्य-दानप्रयोगः ॥ पूर्वोक्तकाले गोमयेनोपलिप्तदेशे आविकं कंबलं तदुपरि सशृङ्गं सखुरं प्राग्ग्रीवं कृष्णाजिनमास्तीर्य सुवर्णखुरं रौप्यदंतं मौक्तिकपुच्छं सुवर्णनाभं कृत्वा तदुपर्यरत्निप्रमाणांस्तिलान् संस्थाप्य वाससाच्छाद्य सगन्धरत्नानि चत्वारि पात्राणि कांस्यघृतदुग्धदधिमधुयुतानि चत्वारो मृदश्च प्रागादिदिक्षु दानदेशाद्बहिश्चम्पकशाखाम व्रणकुंभं च संस्थाप्य देशकालौ सङ्कीर्त्य मम सप्तजन्मोपात्तपापनाशकामा त्मपितृपुत्रापमृत्युपरिहारभार्याधनदेशाद्यवियोगकामः सकलेष्टफलावाप्तिब्रह्मलोकावाप्तिकामश्च कृष्णाजिनप्रदानमहं क० इति सं० ॥ जीर्णपीतवाससा स्वांगानि संमृज्य यानिका-निच पापानि मया लोभात्कृतानि च ॥ लोहपात्रप्रदानेन प्रणश्यंतु ममाशुवै ॥ इति मन्त्रेण सतिललोहपात्रं कृष्णाजिनस्य वामपादे निवेशयेत् ॥ यानिकानि च पापानि कर्णोत्थानि कृतानि च ॥ कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ इति मन्त्रेण मधुमयं कांस्यपात्रं कृष्णाजिनस्य दक्षिणपा

देनिवेश्य ॥ परापवादपैशून्यादभक्ष्यस्यचभक्षणात् ॥ तदुत्थितंतुमेपापंताम्रपात्रात्प्रणश्यतु ॥ इतिमन्त्रेणसतिलंताम्रपात्रंवामहस्ते ॥ कन्या
हृतंगवांचैवपरदारप्रमर्शनम् ॥ रौप्यपात्रप्रदानेनक्षिप्रन्नाशंप्रयातुमे ॥ इतिमन्त्रेणमधुमयंरौप्यपात्रंदक्षिणहस्ते ॥ जन्मजन्मसहस्रेषुकृतंपा
पंकुबुद्धिना ॥ सुवर्णपात्रदानात्तन्नाशयाशुजनार्दन ॥ इतिमन्त्रेणसाज्यंहैमपात्रंमध्येतथाहेममुक्ताविद्रुमदाडिममातुलिङ्गानिनिधायप्रशस्तप
त्रेकर्णयोःसंस्थाप्यद्विजंदृष्ट्वायथाविभववस्त्रालङ्कारादिभिःसंपूज्यपुनर्देश०अमुकगोत्रोमुकशर्माहंममसमस्तजन्मोपात्तादिब्रह्मलोकावाप्त्यन्त
मुक्तागोत्रायशर्मणेसुपूतायित्थम्प्रायइदंकृष्णाजिनंयथाशक्तिसोपस्करंवृषभध्वजप्रीतयेतुभ्यम०ददेनममेति ॥ एतद्दक्षिणापरिमाणंतुगारुडे ॥
सुवर्णनिष्कशतन्तदर्धन्तदर्धंवा ॥ ततोन्यूनत्वेनाधिकफलम् ॥ अस्पृश्यःसद्विजोराजन्चितिरूपसमोहिसः ॥ दानेचश्राद्धकृत्येचदूरतःपरि
वर्जयेदितिगारुडेउक्तम् ॥ स्वगृहान्प्रेष्यतंविप्रंमङ्गलंस्नानमाचरेदितितदस्त्रंकुंभसहितंनीत्वाक्षेप्यंचतुष्पथइति ॥ ततोभूयसींदक्षिणांदत्वा
शिषोगृह्णीयात् ॥ दानेनानेनसकलारिष्टपापनाशोभूमिदानफलंचेतिहेमाद्रिःहोमादिविशेषस्तुग्रंथान्तरादवगंतव्यःइतिकृष्णाजिनदानम् ॥
अथशय्यादानम् ॥ महाभारते ॥ यजमानःपुण्यकालेअष्टदलेतिलप्रस्थंनिक्षिप्यतस्मिन्शय्यामास्तीर्यतस्याःसमंतादीशानादिकोणचतुष्टयेशि
रोभागेचपंचकुंभान्क्रमात् ॥ घृतकुंकुमगोधूमजलपूर्णकुंभमुच्छीर्षेघृतपूर्णकलशंसप्तधान्यानिचसंस्थाप्य ॥ अद्येत्या०ममसमस्तपापक्षयपूर्व-
काप्सरोगणसेव्ययुतविमानकरणकेंद्रपुरगमनोत्तरषष्टिसहस्रवर्षाधिकरणकक्रीडनस्त्रीसंघसमाहृतस्वर्गलोकमहिमत्वतदुत्तरषष्टियोजनमण्ड

लराज्यभोगानन्तरशिवसायुज्यतावाप्तिकामः शय्यादानमहंकरिष्ये । इतिसङ्कल्प्य । द्विजंसपत्नीकंदत्वायथाविभवंवस्त्रालङ्कारादिभिःसंपूज्यश-
य्यायांलक्ष्मीनारायणप्रतिमांस्वर्णमयींसंस्थाप्यसंपूज्यसपत्नीकविप्रेणसहशय्यांप्रदक्षिणीकृत्यनमःप्रमाण्यैदेव्यैइतिचतुर्दिक्षुक्रमेणप्रणम्यतिथ्या
दिसङ्कीर्त्यममसर्वपापक्षयेत्यादिशिवसायुज्यतावाप्तिकामोगोत्रायशर्मणेसुपूजितायइमांशय्यांईशानादिकोणचतुष्टयस्थापनक्रमेणघृतकुंकुमगो
धूमजलघृतपूर्णकुंभसमेतांहंसतूलीप्रच्छन्नांशुभ्रगण्डोपधानिकांप्रच्छादनपटास्तृतांसप्तधान्ययुतांताम्बूलायतनादर्शैलालदङ्ककर्पूरयुतांसुगन्धपरि-
मलभोग्यवस्तुचंदनागरुदीपिकोपानच्छत्रचामरासनयुतांभोजनभाजनजलपात्रपंचवर्णवितानांकिशप्रमाधिन्यंजनशलाकापुष्पमालादियुतांलक्ष्मी
नारायणप्रतिमासहितांयुक्तोपस्करामङ्गिरोदैवतांगोत्रायशर्मणेसुपूजितायशालंकृतायसपत्नीकायतुभ्यमहंसंप्रददेनममेति ॥ शय्योपवेशितवि
प्रहस्तेसाक्षतकुशोदकंक्षिपेत् । मन्त्रस्तु ॥ यथानकृष्णशयनंशून्यंसागरजातया ॥ तथाशय्याममाप्यस्तुशून्याजन्मनिजन्मनिइति ॥ ततःसुवर्णमे-
वदक्षिणांदद्यात् । ततोभूयसींदत्वाब्राह्मणान्संभोजयेदिति । इतिशय्यादानम् । अथशयनदानम्भविष्ये अद्येत्यादि०गोत्रायशर्मणेइदंशयनंसु
खस्पर्शंश्रीविष्णुप्रीतिकामस्तुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ मृदुशयनंसुखदंकेशवस्यप्रियंसदा ॥ दानेनानेनसौभाग्यंसर्वदास्तुगृहेममेति
ततःसुवर्णंदक्षिणा० ॥ इतिशयनदानम् ॥ अथकशिपुदानम् ॥ भविष्ये ॥ अद्येत्यादि०गोत्रानशर्मणेकशिपुयावज्जीवंशीतवातोष्णनिवारण
कामस्तुभ्यमहंसंप्रददेनममेति ॥ मन्त्रस्तु ॥ मृदुत्वबीजकार्पासपूरितंसुखदंशुभम् ॥ तस्मादस्यप्रदानेनसुखंस्यात्सर्वदाममेति ॥ इतिक-

शिपुदानम् ॥ ॥ अथवस्त्रदानानि ॥ नंदिपुराणे ॥ वस्त्रं यथार्थिने दद्यात्क्षुभं वापि यदृच्छया ॥ स भवेद्धनवान् श्रीमान् बृहस्पतिपुरे वसेदिति
विष्णुधर्मोत्तरे । वासो हि सर्वदैवत्यं सर्वप्रायोज्यमुच्यते ॥ वस्त्रदानात्सुवेषः स्याद्रूपद्रविणसंयुतः ॥ युक्तो लावण्यसौभाग्यैर्विरोगी च तथा द्विजः ।
दत्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते ॥ दत्वोर्णजं च तत्रापि फलं दशगुणं भवेदिति ॥ अद्येत्यादि० गोत्रायशर्मणेऽहं श्वेतवस्त्रसूक्ष्मं शिवप्रियं-
देहालङ्करणं वार्हस्पत्यदैवतं तुभ्यमहं संप्रददे न मम इति ॥ मन्त्रस्तु ॥ सितसूक्ष्मं सुखस्पर्शं ईशानादेः प्रियं सदा ॥ देहालङ्करणं यस्मादतः शांति-
प्रयच्छमे इति ॥ इतिश्वेतवस्त्रदानम् ॥ ॥ अथपीतस्य ॥ सङ्कल्पादि० समस्तपापक्षयकामः० ॥ मन्त्रस्तु ॥ पीतवासः सुमङ्गल्यं देवानां-
प्रीतिवर्द्धनम् ॥ दानेनानेन मे पापं हरत्वाशु जनार्दनः ॥ इतिपीतवस्त्रदानम् ॥ ॥ अथरक्तवस्त्रदानम् ॥ भविष्ये ॥ सङ्कल्पादि० आदि-
त्यप्रीतिकामः ॥ मन्त्रस्तु ॥ रक्तवस्त्रं सदारभ्यं आदित्यस्य प्रियं सदा ॥ श्रीकरं रूपदं नित्यमतः शांतिं प्रयच्छमे ॥ इतिरक्तवस्त्रदानम् ॥ ॥
अथनीलवस्त्रदानम् ॥ भविष्ये ॥ सङ्कल्पादि० बलायुःश्रीवृद्धिकामः ॥ मन्त्रस्तु ॥ मनोहरं नीलवस्त्रम्बलरामप्रियं सदा ॥ आयुर्विवर्धनं-
श्रीदमतः शांतिं प्रयच्छमे ॥ इतिनीलवस्त्रदानम् ॥ ॥ अथचित्रवस्त्रदानम् ॥ भविष्ये ॥ सङ्कल्पादि० षण्मुखप्रीतिकामः ॥ मन्त्रस्तु
षण्मुखस्य प्रियं नित्यं चित्रवस्त्रम्मनोरमम् ॥ तस्मादस्य प्रदानेन शांतिरस्तु सदा मम इति ॥ इतिचित्रवस्त्रदानम् ॥ ॥ अथकृष्णवस्त्रदानम् ॥
भविष्ये ॥ सङ्कल्पादि० सर्वारिष्टभयपीडापमृत्युपरिहाराय मृत्योः प्रीतिकामस्य ॥ मन्त्रस्तु ॥ कृष्णं वासः प्रियं मृत्योः सर्वारिष्टविनाशनम् ॥ भयपी-

डामृतिहरमतःशांतिंप्रयच्छमे ॥ इतिकृष्णवस्त्रदानम् ॥ ॥ अथपट्टकूलदानम् ॥ भविष्ये ॥ सङ्कल्पादि० कीर्तिकान्तिसर्वदेवप्रीतिकामस्य
मन्त्रस्तु ॥ पट्टकूलंसदारम्यम्पवित्रंकामदंनृणाम् ॥ विष्ण्वादीनांप्रीतिकरमतःशान्तिंप्रयच्छमे ॥ इतिपट्टकूलदानम् ॥ ॥ अथमृतक-
र्पटदानम् ॥ भविष्ये ॥ सङ्कल्पादि० पितृतृप्तिकामः ॥ मन्त्रस्तु ॥ कीटजंटसरंपुण्यंमृतकर्पटसंज्ञकम् ॥ पितॄणांप्रीतिदंयस्मादतःशांतिं-
प्रयच्छमे ॥ इतिमृतकर्पटदानम् ॥ ॥ अथऊर्णावस्त्रदानम् ॥ भविष्ये ॥ सङ्कल्पादि० सर्वदेवप्रीतिकामः ॥ मन्त्रस्तु ॥ ऊर्णावस्त्रंचारु
चित्रंदेवानांप्रीतिवर्धनम् ॥ ॥ सुखस्पर्शकरंयस्मादतःशांतिंप्रयच्छमे ॥ सकलातथिरमादीनामप्ययमेवमन्त्रः ॥ इत्यूर्णावस्त्रदानम् ॥
अथकंबलदानम् ॥ स्कांदे ॥ कंबलःपट्टगर्भस्तेन्महाशीतविनाशकः ॥ सएवविपरीतस्तेन्महादृष्टिविनाशकः ॥ सङ्कल्पादि० श्रीविष्णुप्री-
तिकामः ॥ मन्त्रस्तु ॥ शीतवर्षाहरःपुण्योहृष्टीबलविवर्धनः ॥ कंबलस्यप्रदानेनशांतिरस्तुसदाममेति ॥ इतिकंबलदानम् ॥ अथचि-
त्रकंबलदानम् ॥ भविष्ये ॥ सङ्कल्पादि० श्रीलक्ष्मीनारायणप्रीतिकामः । मन्त्रस्तु ॥ ऊर्णापट्टस्याविकारादिःसर्वदेवप्रियःशुचिः ॥ चित्रकं-
बलदानेनममसंतुमनोरथाः ॥ इतिचित्रकंबलदानम् ॥ ॥ अथताम्रपात्रदानम् ॥ वराहपुराणे ॥ अथातःसंप्रवक्ष्यामिपात्रदानमनुत्त-
मम् ॥ कृत्वाताम्रमयम्पात्रंयथाविभवविस्तरम् ॥ तत्पात्रेहैमींलक्ष्मीनारायणप्रतिमाउमामहेश्वरप्रतिमांचसंपूज्यद्विजमपिपूजयित्वा ॥
शरीरोत्थसकलपापनाशकामोगोत्रायशर्मणेसुपूजितायइदंताम्रपात्रंउमामहेश्वरलक्ष्मीनारायणप्रतिमासहितंचतुभ्यमहंसंप्रददेनममेति ॥

मंत्रस्तु ॥ परापवादपैशुन्यादभक्ष्यस्यचभक्षणात् ॥ पापंगात्रोत्थितंताम्रपात्रदानात्प्रणश्यत्विति ॥ एवंसंकल्पवाक्यंप्रतिमादिसर्वपात्रदाने-
ष्वूह्यम् । इतिताम्रपात्रदानम् । अथप्रसङ्गात्ताम्रदानमपिभविष्ये । सङ्कल्पः । आरोग्यबलवृद्धिसूर्यप्रीतिकामः मन्त्रस्तु । सूर्यप्रीतिकरंताम्र
मारोग्यबलवर्धनम् ॥ तस्मादस्यप्रदानेनशांतिरस्तुसदाममेति ॥ इतिताम्रदानम् ॥ अथकांस्यपात्रदानम् ॥ वाराहे ॥ सङ्कल्पादिपूर्ववत् ॥
कामकृतपापनाशकामः ॥ मंत्रस्तु । यानिपापान्यनेकानिकामाकामकृतानिच ॥ कांस्यपात्रप्रदानेनतानिनश्यन्तुमेसदेति ॥ इतिकांस्यपात्रदानम्
अथप्रसङ्गात्कांस्यपात्रदानमपि ॥ भविष्ये ॥ सङ्कल्पादि०ब्रह्मविष्णुशिवप्रीतिकामः ॥ मंत्रस्तु ॥ कांस्येब्रह्मशिवौसाक्षात्कांस्यमेतद्विभावसुः
कांस्यंविष्णुमयंयस्मादतःशांतिंप्रयच्छमे ॥ इतिकांस्यदानम् ॥ ॥ अथलोहपात्रदानम् ॥ भविष्ये ॥ सङ्कल्पादि०लोभाज्ज्ञानाज्ञा
नकृतपापक्षयकामः ॥ मंत्रस्तु ॥ ज्ञानाज्ञानकृतम्पापंमयालोभात्कृतंचिरात् ॥ लोहपात्रप्रदानेनममपीडांव्यपोहतु ॥ इतिलोहपात्रदानम्
अथरौप्यपात्रदानम् ॥ विष्णुधर्मे ॥ सङ्कल्पादि०कन्यादूषणपरदाराभिमर्षनादिपापक्षयकामः ॥ मंत्रस्तु ॥ कन्यादूषणतःपापंपरदाराभि
मर्षनात ॥ रौप्यपात्रप्रदानेनतानिनश्यन्तुमेसदेति ॥ इतिरौप्यपात्रदानम् ॥ ॥ अथसुवर्णपात्रदानम् ॥ वाराहे ॥ सङ्कल्पादि०जन्मा
न्तरसहस्रोत्थदुष्कृतनाशकामः ॥ मंत्रस्तु ॥ जन्मान्तरसहस्रेषुयत्कृतंदुष्कृतंमया ॥ तत्सर्वंनाशमायातुस्वर्णपात्रप्रदानतइति ॥ इतिसुव-
र्णपात्रदानम् ॥ ॥ अथस्थालीदानम् ॥ भविष्ये ॥ कृत्वाताम्रमयींस्थालींपलानांपंचभिःशतैः ॥ अशक्तस्तुतदर्धेनतदर्धार्धेनवापुनः ॥

अत्यशक्तौमृन्मयींपायसेनपूर्णांघृतशर्कराशाकजलपात्रयुतांचसवस्त्रांमण्डलेसंस्थाप्यगन्धमाल्यादिनालंकृत्य ॥ आदित्येहनिसंक्रांतौचतुर्दश्यष्ट-
मीषुच ॥ एकादश्यांतृतीयायांविप्रायप्रतिपादयेत् ॥ अद्येत्यादि० यावज्जीवंसकुटुंबस्ययथेष्टमन्नमनयत्नभोज्यादिलाभकामः इमांस्थालींपायस
पूर्णांघृतशर्कराशाकजलपात्रवस्त्राद्युतांमण्डलस्थांसालंकृतांगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ इमांपायसपूर्णांतुस्थालींघृत-
जलादिभिः ॥ दानात्सम्पत्तिपात्रःस्यादतःपाहिमहेश्वरेति ॥ सुवर्णादक्षिणां० ॥ इतिस्थालीदानम् ॥ ॥ अथवेदपुस्तदानानि । वाय-
वीये ॥ अष्टादशपुराणानिसहिरण्यानिसर्वशः ॥ लिखित्वायःप्रयच्छेत्तुसर्वविद्यापारगोभवेत् ॥ रामायणम्भारतंचदत्वास्वर्गेमहीयते ॥ ध-
र्मशास्त्रन्नरोदत्वास्वर्गलोकेमहीयतइति ॥ भविष्ये ॥ धेनुदानसहस्रेणसम्यक्दत्तेनयत्फलम् ॥ तत्फलंसमवाप्नोतिपुस्तकैकप्रदानतइति ॥
अथप्रसङ्गाच्चतुर्दशविद्याउक्तामदनरत्ने ॥ नंदिपुराणे ॥ विद्याश्चतुर्दशप्रोक्ताःक्रमेणचयथास्थिताः । षडङ्गाश्चतुरोवेदाधर्मशास्त्रम्पुरातनम् ।
मीमांसातर्कशास्त्रञ्चएताविद्याश्चतुर्दश ॥ आसामवान्तरोत्पन्नाःपराविद्यासहस्रशइति ॥ पुरातनपुराणम् ॥ तत्रैवकालमाह ॥ चन्द्रसूर्योपरा
गेवासंक्रांत्ययनवासरे ॥ शुभेन्हिशुभनक्षत्रेकृत्वामण्डलमुत्तमम् ॥ चतुरस्रंवितानंचबध्वापुष्पोपशोभितम् ॥ तत्रन्यस्यासनंदिव्यंदिव्य
गंधादिवासितम् ॥ तत्रसंस्थापयेद्यन्त्वंनागदन्तमयंशुभम् ॥ संस्थाप्यपुस्तकन्तत्रनैगमंभारतादिकम् ॥ नैगमंवेदपुस्तकम् ॥ पुण्यम्पवित्रंसं-
पूज्यवस्त्रालङ्कारभूषणैः ॥ पूजयेच्चदिशापालान्लोकपालान्यथाक्रमम् ॥ कन्यास्त्रियश्चसंपूज्यामातरःकल्पयेद्व्रताः ॥ शास्त्रन्तद्भावविदुषिद्यात्पु-

स्तकमुत्तममिति ॥ अथास्यदानप्रयोगः ॥ यजमानःकृतनित्यक्रियःशुचिःपुण्यकालेदेशकालौसंकीर्त्यगोसहस्रदानसमफलावाप्तिस्वर्गलोकमहि-
मत्वसकलचतुर्दशविद्यावेदवेदाङ्गपारगत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंअमुकपुस्तकदानमहंकरिष्यइतिसंकल्प्यपूर्वोक्तमण्डपादियथाशक्त्याक
ल्पयित्वानागमययन्त्रेवस्त्रद्वयबद्धऊर्णापट्टसूत्रवेष्टितंपुस्तकंसंस्थाप्यहैमींसरस्वतीप्रतिमांसिंहंविष्णुंचतत्रावाह्यपरितोलोकपालांश्चावाह्यतत्र-
सुवासिनीःकुमारीश्चावाह्य ॥ यागुंगुर्यासिनीवालीयाराकायासरस्वती । इन्द्राणीमह्वऊतयेवरुणानींस्वस्तयेइतिमन्त्रेण । यद्वा ॥ देवींवाचमज
नयंतदेवास्तांविश्वरूपाःपशवोवदंति ॥ सानोमन्द्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ इतिमन्त्रेणावाहितदेवताःषोडशोपचारैरभ्यर्च्याद्विजंदत्वा
यथाविभवंवस्त्रालंकारादिभिःपूजयेत् ॥ अद्येत्यादिगोत्रायशर्मणेसुपूजितायसंकल्पोक्तफलंसंकीर्त्यइदंपुस्तकप्रतिमायुतंससिंहंऊर्णापट्टबद्धंदृ
ढसूत्रवेष्टितंनागमययन्त्रेस्थितंयथाशक्तिसोपस्करंसारस्वतदैवतंतुभ्यमहंसंप्रददेनममेति । मन्त्रौतु । सर्वविद्याश्रयायत्नाःकरणांलिखिताक्षरम् ॥
पुस्तकस्यप्रदानेनप्रीणातुममभारति ॥ सरस्वतिजगन्मातःशब्दब्रह्माधिदैवते ॥ अस्याःप्रदानाद्वागीशाप्रसन्नाजन्मजन्मनि ॥ ततःसुवर्णदक्षि-
णांदद्यात् ॥ इतिपुस्तकदानम् । अथरत्नदानम् ॥ भविष्ये ॥ माणिक्यंपद्मरागंचवैडूर्यंपद्ममेवच ॥ मारकतंचगोमेदंपुष्परागंचमौक्तिकम् । हरि
तंचनवैतानिरत्नान्युक्तानिसूरिभिरिति । रत्नदानाद्धरिलक्ष्मीःस्वपदंचप्रयच्छतीति ॥ अद्येत्यादि०लक्ष्मीनारायणपदावाप्तिकामः ॥ मन्त्रस्तु ॥
यस्माद्रत्नेषुसर्वेषुसर्वदेवाव्यवस्थिताः ॥ तस्माद्रत्नप्रदानेनवांछितंफलमश्नुते ॥ इतिनवरत्नदानानि ॥ मौक्तिकमन्त्रस्तु ॥ मौक्तिकंभूषणंविष्णोः

प्रियो गौर्याः शिवस्य च ॥ दानेनास्य सुखं चास्तु ऐहिकामुष्मिकं ममेति ॥ प्रवालदानमन्त्रस्तु ॥ प्रवालं पुष्टिदं प्रोक्तं कान्तिदं शुभदं तथा ॥ दानेनास्य महत्सौख्यं शान्तिरस्तु सदा ममेति ॥ कर्णभूषणदानमन्त्रस्तु ॥ भूषणं कर्णयोः स्त्रीणां स्वर्णरत्नादिसंयुतम् ॥ ताटङ्कस्य प्रदानेन सौभाग्यं वर्धतां ममेति ॥ माङ्गल्यमणिदानमन्त्रस्तु । माङ्गल्यमणयो लक्ष्म्या गौर्याः प्रीतिकराः सदा ॥ तस्मादेषां प्रदानेन शान्तिरस्तु सदा ममेति ॥ हरिद्रामन्त्रस्तु गौर्याः प्रीतिकरा नित्यं हरिद्रा सर्वकामदा ॥ तस्मादस्याः प्रदानेन सौभाग्यं जन्मजन्मनीति ॥ कुंकुमदानमन्त्रस्तु ॥ कुंकुमं शोभनं रम्यं सर्वदा मङ्गलप्रदम् ॥ दानेनास्य महत्सौख्यं सौभाग्यं स्यात्सदा ममेति ॥ सिंदूरदानमन्त्रस्तु ॥ सिंदूरं शोभनं रम्यं कुङ्कुमं स्यप्रियं परम् ॥ दानेनास्य परा लक्ष्मीः स्थिरा मे चास्तु संततिरिति ॥ कस्तूरीदानमन्त्रः । कस्तूरी भाग्यदा भव्या देवमर्त्यजनप्रिया ॥ दानेनास्याः सुखं भोगः शान्तिरस्तु सदा ममेति ॥ कर्पूरदानमन्त्रः ॥ कर्पूरं शीतलं चारु देवर्षिगुरुसेवितम् ॥ तस्मादस्य प्रदानेन लक्ष्मीः प्रीतिकरा ममेति ॥ तथा ॥ कर्पूरं रुचिरं विप्रगृहाणेमं सुपूजितम् ॥ पुण्यगन्धस्थिता सा मे कमला प्रीयतामिति ॥ नानासुगन्धद्रव्यदानमन्त्रस्तु ॥ गन्धो मनोहरो दिव्यः शान्तिदः सुखदस्तथा ॥ तस्मादस्य प्रदानेन सुगंधः स्यात्सदा ममेति । इति भविष्यपुराणोक्तनानाद्रव्यदानमन्त्राः ॥ ॥ अथ देवगलन्तिकादानम् ॥ भविष्यपुराणे ॥ वसन्तसमयं ज्ञात्वा गत्वा देवालयं शुभम् ॥ शिवस्य विष्णोरर्कस्य इष्टदेवस्य वा पुनः ॥ स्रवंतं कारयेत्कुम्भं सच्छिद्रं देवमस्तके ॥ दिवारात्रौ स्रवेद्देवं जलं मासचतुष्टयम् ॥ स्रवत्तद्बिंदुसंख्याकान् स्वर्गलोके महीयते ॥ अत्र प्रयोगस्तु ॥ वसन्ते शुभदिने स्थिरलग्नादौ कृतनि-

त्यक्रियःआचम्यप्राणानायम्य ॥ अद्येत्यादि०देवशिरसिस्रवज्जलबिंदुसमसंख्याकाब्दशिवपुरादिनिवासकामोमासचतुष्टयंदिवारात्रौचदेवेग-
लंतिकादानङ्करिष्येइतिसङ्कल्प्यप्रासादंसम्यक्प्रक्षाल्यदेवंपंचामृताद्युपचारैरभ्यर्च्यदेवेगलंतिकांबध्नीयात् ॥ मन्त्रस्तु ॥ स्कांदे ॥ ॐनमः
शङ्करःशंभुर्भवोधाताशिवोहरः ॥ प्रीयतांमेमहारुद्रोजलसेकप्रदानतइति ॥ एवंमासचतुष्टयंदेवेगलंतिकादानंकृत्वाअन्तेप्येवंपंचामृतादिपू-
जांकृत्वायथाशक्तिब्राह्मणान्भोजयित्वातेभ्योदक्षिणांदद्यादिति ॥ त्रयाणामपिलोकानामुदकंजीवनंस्मृतं ॥ पवित्रममृतंयस्मात्तद्देयंपुण्य-
मिच्छतेति ॥ इतिस्कांदोक्तंदेवेगलंतिकादानम् ॥ ॥ अथप्रपादानम् ॥ भविष्ये ॥ अतीतेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे ॥ पुण्ये-
न्हिविप्रकथितेमंडपंकारयेत्ततइति । पुरमध्येचतुष्पथेजलरहितमार्गवृक्षमूलेप्रपामंडपंकारयित्वातन्मध्येसुगंधकान्जलकुंभान्संस्थाप्यप्रपापा
लकंवटुपुत्रंसंस्थाप्यप्रार्थयेत् ॥ प्रपेयंसर्वसामान्याभूतेभ्यःप्रतिपादिता ॥ अस्याःप्रदानात्सकलाममसंतुमनोरथाइति । ततोनिवारितंदेयंतोयं
मासचतुष्टयम् ॥ त्रिपक्षंवामहाराजन्जीवानांजीवनंपरम् ॥ प्रत्यहंकारयेत्तस्यांभोजयेच्छक्तितोद्विजान् ॥ अनेनविधिनायस्तुग्रीष्मेतापप्र-
णाशनम् ॥ पानीयमुत्तमंदद्यात्तस्यपुण्यफलंशृणु ॥ कपिलाशतदानस्यसम्यक्दत्तस्ययत्फलम् ॥ तत्फलंसमवाप्नोतिसर्वदेवैःसुपूजितइति
इतिप्रपादानम् ॥ ॥ अथहैमंतिकेग्निदानम् ॥ भविष्ये ॥ अग्निंहैमंतशिशिरऋतौतीर्थेसुरालये ॥ मठेदेवालयेचैवअग्निंप्रज्वालयेत्तुयः । ष-
ष्टिवर्षसहस्राणिस्वर्गलोकेमहीयतइति ॥ तथाप्रज्वालयेद्वह्निंसेवनार्थंद्विजन्मनाम् ॥ दातव्योदीपकोखंडोदेवमुद्दिश्यमाधवमितिमाधवोक्तेश्च

इतिहेमंतशिशिरर्त्तावग्निदाम् ॥ अथदीपदाम् ॥ संवर्तः ॥ देवागारेद्विजागारेदीपंदत्वाचतुष्पथे । मेधावीज्ञानसंपन्नःचक्षुष्मांश्चसदाभवेदिति ॥ तथोत्तरायणेदीपदानमतिप्रशस्तम् ॥ मंत्रस्तु ॥ दीपोज्ञानप्रदोनित्यंदेवतानांप्रियःसदा । दानेनास्यभवेत्सौख्यंशांतिर्मेवांछितंफलं सज्योतितैलपात्रंचदीपंवाद्गुसमन्वितः ॥ सुखंस्यादस्यदानेनशांतिरस्तुसदाममेति ॥ दीपदानम् ॥ ॥ अथपांथपरिचर्या ॥ भविष्ये ॥ पांथंपरिचरेद्यस्तुशयनासनभोजनैः ॥ सस्वल्पेनप्रयासेनजयतिक्रतुयाजिनमिति ॥ तथा ॥ अप्रणोद्योतिथिःसायमपिवाभूतृणोदकैरितियाज्ञवल्क्यः ॥ प्रचेताअपि ॥ यःप्रातर्वैश्वदेवांतेसायंवागृहमागतः ॥ देववत्पूजनीयोसौसूर्योढःसोतिथिस्मृतइति ॥ तथा ॥ दिवातिथौतुविमुखेगतेयत्पातकंनृणाम् ॥ तदेवाष्टगुणंपुंसांसूर्योढेविमुखेगते ॥ तस्मात्स्वशक्त्याराजेन्द्रसूर्योढमतिथिंनरः ॥ पूजयेत्पूजितेतस्मिन्पूजिताःसर्वदेवताइति ॥ इतिपांथपरिचर्या ॥ ॥ अथगोपरिचर्या ॥ विष्णुः ॥ गवांकंडूयनंचैवसर्वकल्मषनाशनम् ॥ गवांग्रासप्रदानेनस्वर्गलोकेमहीयतइति ॥ ग्रासप्रदानमन्त्रस्तुपराशर्के ॥ सुरभित्वंजगन्मातर्नित्यंविष्णुपदेस्थिता ॥ सर्वदेवमयेग्रासंमयादत्तमिमंग्रस ॥ प्रार्थनामन्त्रस्तु ॥ ततः ॥ सर्वदेवमयेदेविसर्वदेवैरलंकृते ॥ मातर्ममाभिलषितंसफलंकुरुनंदिनीतिप्रार्थयेत् ॥ इतिगोपरिचर्या ॥ ॥ अथधर्मघटदानम् ॥ विष्णुः ॥ शीतलेनसुगन्धेनवारिणापरितंघटम् ॥ शुक्लचंदनलिप्ताङ्गंपुष्पदामोपशोभितम् ॥ दध्योदनभृतंकुर्याच्छरावन्तस्यचोपरि ॥ उपानच्छत्रसंयुक्तंधर्माख्यंकल्पयेत्घटम् ॥ पुष्पाक्षतान्गृहीत्वातुइमंमंत्रमुदीरयेत् ॥ नमोस्तुविष्णुरूपायनमःसागरसंभव-

अपांपूर्णोद्धरास्मांत्वंदुःखसंसारसागरादिति ॥ प्रार्थनामन्त्रस्तु ॥ उदकुंभोमयादत्तो ग्रीष्मकालेदिनेदिने ॥ शीतोदकप्रदानेनप्रीयतांमधुसू-
दनइति ॥ भविष्ये ॥ प्रत्यहंधर्मघटकोवस्त्रसंवेष्टितोनवः ॥ ब्राह्मणस्यगृहेदेयःशीतामलजलःशुचिः ॥ वसन्तग्रीष्मयोर्मध्येपानीयंयःप्रय-
च्छति ॥ पलेपलेसुवर्णस्यफलमाप्नोतिमानवः ॥ मार्गशीर्षात्समारभ्यउदकुंभंतुयत्क्षिपेत् ॥ दिनेदिनेसहस्रस्यगवांदानफलंलभेदिति ।
उद्यापनंतुमासिमासिकार्यम् ॥ भविष्ये ॥ मण्डकावेष्टिकाभिश्चपक्वान्नैःसार्वकामिकैः ॥ उद्दिश्यशङ्करंविष्णुंब्रह्माणमथवापितॄन् ॥ ततःस
तिलंप्रोच्यानेनमन्त्रेणदद्यात् ॥ एषधर्मघटोदत्तोब्रह्माविष्णुशिवात्मकः ॥ अस्यप्रदानात्सकलाममसंतुमनोरथाःइति ॥ अनेनविधिनायस्तु-
धर्मकुंभंप्रयच्छति ॥ वसन्तग्रीष्मसमयेगोप्रदानफलंलभेदिति ॥ इतिधर्मघटदानम् ॥ कलशदानमन्त्रस्तु ॥ कलशंशुभदंभव्यंजलेनपरिपू-
रितम् ॥ दानेनास्यमहत्सौख्यंशांतिरस्तुसदाममेति ॥ जलपात्रदानमन्त्रोपि ॥ वारिणापूरितंपात्रंतापत्रयहरंशुभम् ॥ देवर्षिपितृतृप्त्यर्थंगृ-
हाणसुरसत्तमेति ॥ ॥ अथयज्ञोपवीतदानम् ॥ बौधायनः ॥ यज्ञोपवीतदानेनजायतेब्रह्मवर्चसी ॥ तस्मात्तानिप्रदेयानिब्राह्मणेभ्यो
विपश्चितेति ॥ इत्युपवीतदानम् ॥ ॥ हेमाद्रौमाघेतिलदानात्पापनाशः ॥ याम्यलोकजयकामस्य ॥ फाल्गुनेप्रियंगुदानाल्लक्ष्मीवा-
न्भवति ॥ चैत्रेचित्रवस्त्रदानात्सौभाग्यवान् ॥ वैशाखेअपूपदानात्स्वर्गलोकावाप्तिः ॥ ज्येष्ठेछत्रदानात्सर्वान्कामानवाप्नोति ॥ आषाढेचंद-
नकर्पूरदानात्फलातिशयः ॥ श्रावणेवस्त्रदानान्महाफलम् ॥ भाद्रेफाणितदानात्फलातिशयः ॥ आश्विनेघृतदानेनरूपवान् ॥ कार्तिके-

दीपान्नदानात्चानर्घफलम् ॥ मार्गशीर्षे लवणदानाद्रूपवान् ॥ पौषे स्वर्णदानात्तुष्टिमान् ॥ सर्वमासशुक्लपक्षेषु पुष्पदानान्महालक्ष्मीमवा-
प्नुयात् ॥ कृष्णपक्षेषु फलदानात्फलातिशयः ॥ इतिमासपक्षदानानि ॥ ॥ अथाधिमासेदानम् ॥ हेमाद्रौपाद्मे ॥ अधिमासेतु संप्राप्ते
गुडसर्पियुतानिच ॥ चन्द्रवद्वर्तुलान्यङ्ग व्रीहिपिष्टकृतानिच ॥ खाद्यानिदधिमिश्राणि अधिमासेनृपोत्तम ॥ त्रयस्त्रिंशदपूपानिदातव्यानिदिने
दिने ॥ व्यतीपातदिनेयद्वा द्वादश्यामथवानृप ॥ पौर्णमास्याममायांवानवम्यांवानृपोत्तम ॥ अष्टम्यामथपंचम्यांकुर्याद्व्रतमनुत्तमम् ॥ अ
धिमासेतु संप्राप्ते त्रयस्त्रिंशत्तु देवताः ॥ उद्दिश्यापूपदानेनपृथ्वीदानफलंलभेत् ॥ देवतानामानितु भविष्ये ॥ विष्णुं१ जिष्णुं२ महाविष्णुं३ हरिं४
कृष्णं५ मधोक्षजम्६ ॥ केशवं७ माधवं८ रामं९ मच्युतं१० पुरुषोत्तमम्११ ॥ गोविंदं१२ वामनं१३ श्रीशं१४ श्रीकण्ठं१५ विश्वसाक्षिणम्१६ ॥
नारायणं१७ मधुरिपुं१८ मनिरुद्धं१९ त्रिविक्रमम्२० ॥ वासुदेवं२१ जगद्योनि२२ मनंतं२३ शेषशायिनम्२४ ॥ सङ्कर्षणंच२५ प्रद्युम्नं२६ दैत्यारिं
विश्वतोमुखम्२८ ॥ जनार्दनं२९ धरावासं३० श्रीपतिम्३१ प्रतिनामभिः ॥ त्रयस्त्रिंशदपूपानिकांस्यपात्रेनिधायच ॥ सघृतंसहिरण्यंचब्रा-
ह्मणायनिवेदयेत् ॥ अद्येत्यादि॰ ममफलावाप्ति विष्ण्वादिश्रीपत्यंताः त्रयस्त्रिंशद्देवताउद्दिश्यश्रीपुरुषोत्तमभास्करप्रीतिकामस्त्रगोत्रायशर्मणे-
सुपूजितायइदंवायनकन्त्रयस्त्रिंशदपूपोपेतकांस्यपात्रंससुवर्णघृततांबूलदक्षिणादिसोपस्करंश्रीविष्णुरूपायब्राह्मणायतुभ्यमहंसंप्रददेनममेति
दद्यात् ॥ दानमन्त्रस्तु ॥ विष्णुरूपीसहस्रांशुःसर्वपापप्रनाशनः ॥ अपूपान्नप्रदानेनममपापंव्यपोहतु ॥ नारायणजगद्बीजभास्करप्रति-

रूपक ॥ दानेनानेनपुत्रांश्चसम्पदंचाभिवर्धय ॥ यस्यहस्तेगदाचक्रेगरुडोयस्यवाहनं ॥ शंखःकरतलेयस्य समेविष्णुःप्रसीदतु ॥ कलाकाष्ठादिरू
पेणनिमेषघटिकादिना ॥ योवंचयतिभूतानितस्मैकालात्मनेनमः ॥ कुरुक्षेत्रमयोदेशःकालःपर्वद्विजोहरिः ॥ पृथ्वीसममिदंदानंगृहाणपुरुषो-
त्तम ॥ मलानांचविशुद्ध्यर्थंपापप्रशमनायच ॥ पुत्रपौत्राभिवृद्ध्यर्थंप्रदत्तंतवभास्कर ॥ मंत्रैरेतैस्तुयोदद्यात्त्रयस्त्रिंशदपूपकान् ॥ प्राप्नोतिविपु
लांलक्ष्मींपुत्रपौत्रादिसंपदमित्युक्तंमहाभारते ॥ एतन्मलमासव्रतंतुदानरूपंसर्वेषांनित्यंमलमासंयदाप्राप्यसंध्योपासनतर्पणम् ॥ श्राद्धादिनियमं-
जाप्यंनिष्फलंतद्व्रतंविनेति ॥ भविष्ये ॥ अकरणेप्रत्यवायोक्तेश्च ॥ इत्यधिमासेदानरूपव्रतम् ॥ अथप्रातर्नित्यंघृतपात्रछायादानम् ॥ भविष्ये
कांस्यपात्रेस्थिताज्यंचआत्मरूपंनिरीक्ष्यतु ॥ ससुवर्णंतुयोदद्यात्सर्वविघ्नोपशान्तये ॥ अद्येत्यादि०ममैतच्छरीराविच्छिन्नसमस्तपापक्षयसर्वग्र
हपीडाशान्तिशरीरोत्थार्तिनाशमनःप्रसादवांछायुरारोग्यादिसर्वसौभाग्यकामोसौख्यकामोवागोत्रायशर्मणेइदंस्वदेहछायावीक्षिताज्यपूरितकां
स्यपात्रंससुवर्णं विष्णुदैवतंतुभ्यमहंसंप्रददेनममेति ॥ मंत्रौतु ॥ यालक्ष्मीर्यच्चमेदौस्थ्यंसर्वाङ्गसमुपस्थितम् ॥ तत्सर्वंनाशयाज्यत्वंश्रियमायु-
श्चवर्द्धय ॥ आज्यन्तेजःसमुद्दिष्टमाज्यम्पापहरम्परम् ॥ आज्यंसुराणामाहारःसर्वमाज्येप्रतिष्ठितम् ॥ आज्यपात्रप्रदानेनशान्तिरस्तुसदाममेति
इतिनित्यछायादानम् ॥ ॥ अथसंक्रांतिदानम् ॥ विश्वामित्रः ॥ मेषसंक्रमणेभानोर्मेषदानंमहाफलम् ॥ वृषसंक्रमणेदानंगवांप्रोक्तंतथै-
वच ॥ वस्त्रान्नपानदानानिमिथुनेविहितानितु ॥ घृतधेनुप्रदानंतुकर्कटेचविशिष्यते ॥ पात्रंदद्यात्ससुवर्णंसिंहेचविहितंतथा ॥ कन्याप्रवेशे

वस्त्राणांसुरभीणांतथैवच ॥ तुलाप्रवेशेधान्यानांबहुबीजफलान्यपि ॥ कीटप्रवेशेवस्त्राणांविस्तनांदानमेवच ॥ कीटोवृश्चिकः ॥ धनुःप्रवेशे-
वस्त्राणांयानानांदानमुच्यते ॥ झषप्रवेशेदारूणांदानमग्नेस्तथैवच ॥ झषोमकरः ॥ कुंभप्रवेशेदानंतुगवामंबुतृणस्यच ॥ मीनप्रवेशेह्यमूनां
मालानामपिचोत्तमम् । दानान्यथैतानिमयाद्विजेंद्राःप्रोक्तानिकालेतुनरस्तदत्वा । प्राप्नोतिकामंमनसिस्वभीष्टंतस्मात्प्रशंसंतिहिकालदानमिति ।
अत्रकालःसमयः ॥ इतिसंक्रांतिदानानि ॥ ॥ अथनानाधान्यदानमंत्राः ॥ हेमाद्रौदानकांडे ॥ देयंतद्योजयेत्पूर्वंततोविप्रंप्रपूजयेत् ।
तत्तन्मंत्रैःप्रदद्याद्वैसर्वदानेष्वयंविधिरिति ॥ तत्रादौतंडुलदानमंत्रः ॥ पावनाःसर्वयज्ञेषुप्रशस्ताहोमकर्मणि ॥ तंडुलानांप्रदानेनप्रीयतामग्निर्देवताः ॥ तथा ॥ व्रीहिजास्तण्डुलाःशुद्धाःपितृदेवद्विजप्रियाः ॥ तस्मादेषांप्रदानेनसर्वकामाश्चमेसदा ॥ व्रीहिदानमंत्रस्तु ॥ ब्रह्मणा
निर्मिताःपूर्वंव्रीहयोयज्ञसाधनाः ॥ अनेनव्रीहिदानेनममसंतुमनोरथाइति ॥ यवदानमंत्रस्तु ॥ धान्यराजाश्चमाङ्गल्येद्विजप्रीतिकरायवाः ॥
तस्मादेषांप्रदानेनममास्त्वभिमतंफलन्तथा । पर्वमेवहियज्ञार्थंनिर्मिताब्रह्मणायवाः । अनेनयवदानेनशान्तिरस्तुसदाममेति । गोधूमदानमंत्रस्तु
धान्यचूडामणिर्जंबूद्वीपेगोधूमसंभवाः ॥ गंधर्वसौख्यतृप्तिःस्यादतःशान्तिंप्रयच्छतु ॥ मुद्गस्य ॥ मुद्गधान्यंप्रियंचैवमनुष्याणांद्विजान्तथा ।
तस्मादेषांप्रदानेनशान्तिःस्वस्त्ययनंममेति ॥ माषस्य ॥ यस्मान्मधुवधेकालेविष्णुदेहसमुद्भवाः ॥ पितॄणांतृप्तिदामाषाअतः० ॥ चणकस्य
पुरागोवर्धनोद्धारसमयेकृष्णभक्षिताः ॥ चणकाःसर्वपापघ्नाअतःशान्तिंप्रयच्छमे ॥ कुलित्थ ॥ अग्निगर्भोद्भवाःसौम्याबलारोग्ययशःप्रदाः ॥

कुलित्थानांप्रदानेनशान्तिरस्तुसदाममेति ।। तिलदाने ।। तिलाःपापहरानित्यंविष्णुदेहसमुद्भवाः ।। तस्मादेषांप्रदानेनपापनाशनमुच्यतेति ।।
स्वर्णतिलदानम् ।। तिलाःस्वर्णमयादेवदुरितक्षयकारकाः ।। विष्णुप्रीतिकरानित्यमतः० ।। सामान्यतःसर्वधान्यमंत्रस्तु ॥ धान्यङ्करोतिदाता-
रमिहलोकेपरत्रच ।। तस्मादस्यप्रदानेनममसंतुमनोरथाइति ।। ससुवर्णतिलपात्रदानमंत्रस्तु ।। तिलाःपुण्यापवित्राश्चसर्वपापहराःशुभाः ।।
शुक्लाश्चैवतथाकृष्णाविष्णुगात्रसमुद्भवाः ।। यानिकानिचपापानिब्रह्महत्यासमानिच ।। तिलपात्रप्रदानेनतानिनश्यंतुमेसदेति ।। निष्पावदान
मन्त्रस्तु ।। निष्पावानिर्मिताःपूर्वंलोकानांहितकाम्यया ।। तस्मादेषांप्रदानेनममपापंव्यपोहत्विति प्रियंगुदानम् ।। प्रियङ्गवःप्रियायस्मादग्नेस्वह-
व्यसाधनाः ।। तस्मादेषांप्रदानेनप्रीणातुपुरुषोत्तमइति ।। लङ्कदाने ।। वातप्रवर्द्धकालङ्काबलदाःपुष्टिकारकाः ।। प्राणिप्रीतिकरानित्यमतःशां
तिंप्रयच्छमे । यावनालदाने । यावनालाःप्रीतिकराःकांतिपुष्टिबलप्रदाः ॥ तस्मादेषांप्रदानेनविष्णुःप्रीतिकरोममेति ।। अथमसूरिकादानम् ॥
सवत्कलामसूरास्तुदुरितक्षयकारकाः ॥ तस्मादेषांप्रदानेनविष्णुःप्रीतिकरोममेति ॥ सामान्यधान्यमन्त्रस्त्वत्रबोध्यः ॥ इतिहेमाद्रौनानाधान्य-
मन्त्राः ॥ अथान्नदानमंत्राअपितत्रैव ॥ आदौपायसदानमंत्रस्तु ॥ पायसंशर्करायुक्तंसघृतंकांस्यभाजनम् ॥ प्रदानान्मेफलंचास्तुऐहिकामु-
ष्मिकंचयदिति ॥ कमण्डलुदानमंत्रस्तु ॥ सूर्यमण्डलसंभूतागौल्यदुग्धयुताःप्रियाः ॥ जनार्दनादिदेवानामतःपाहिसनातनेति ॥ ओदनंमंत्रः ॥
अन्नंब्रह्ममयंसाक्षान्नराणांजीवरक्षणम् ॥ ओदनस्यप्रदानेनममसंतुमनोरथाइति ॥ दध्यन्नदानम् ॥ चन्द्रमण्डलमध्यस्थंचद्राबिदुसमप्रभम् ॥ दध्यन्न

स्य प्रदानेन प्रीयतां यामनो मे नेति ॥ कृसरान्नदानम् ॥ कृसरान्नं स्वादु यद् देवानां प्रीतिवर्धनम् ॥ घृताञ्जनसंयुक्तं दत्वा रोगैर्विमुच्यत इति ॥ ना-
नाभक्ष्यदानम् ॥ केशवस्य प्रिया भक्ष्याः शंभुब्रह्मादितुष्टिदाः । पयश्चिवापूपकाद्यायच्छंतु बलमौरसमिति ॥ सर्वान्नदानम् ॥ अन्नमेव यतो लक्ष्मीर-
न्नमेव जनार्दनः ॥ अन्नं ब्रह्माखिललोकानां तस्मै मे सर्वजन्मनीति ॥ इति हेमाद्युक्तान्नदानमंत्रः ॥ अन्येपि केचन मंत्रास्तत्रत्या एव ॥ सक्तुदाने ॥
प्राजापत्या यतः प्रोक्ताः सक्तवो यज्ञकर्मणि ॥ तस्मादेषां प्रदानेन प्रीयतां मे प्रजापतिरिति ॥ शर्करादानम् ॥ अमृतस्य कुलोत्पन्नाद्इक्षोप्यनु शर्करा
सूर्यप्रीतिकरा नित्यमतः शांतिं प्रयच्छ मे ॥ तथा ॥ शर्करेक्षुरसोद्भूता सदा स्वादुकरा प्रिया ॥ दानेनास्याः खलु मे नित्यं तुष्टाः स्युर्द्विजदेवता इति ॥ गुडदा-
नम् ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा ॥ तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥ मम तस्मात्परां शांतिं ददस्व गुड सर्वदेति ॥ इक्षुदंडदानम् ।
इक्षुदंड गुणतर रसात्तं सर्वकामदम् ॥ तुभ्यं दानेन तेनाशु प्रीयतां परमेश्वर इति ॥ मधुदानम् ॥ यस्मात्पितॄणां श्राद्धेषु पीतं मध्वमृतोद्भवम् ॥ स-
दा तस्य प्रदानेन मोक्षः स्याद् दुःखसागरात् ॥ घृतदानमंत्रः ॥ कामधेनोः समुद्भूतं देवानाममृतं हविः ॥ आयुर्विवर्धनं दातू राज्यं पातु सदैव मामिति ।
तैलदानमंत्रः ॥ तैलं पुष्टिकरं नित्यमायुर्वृद्ध्यघनाशनम् ॥ अमाङ्गल्यहरं श्रीमदतः शांतिं प्रयच्छ मे इति ॥ नवनीतदानमंत्रः ॥ कामधेनोः स-
मुद्भूतं विष्णोः प्रीतिकरं परम् ॥ नवनीतप्रदानेन बलं पुष्टिं च मे च्युतेति ॥ तथा ॥ क्षीरार्णवसमुद्भूतं विष्णोस्तुष्टिकरं सदा ॥ नवनीतप्रदानेन वां-
छितं चास्तु मे सदेति ॥ क्षीरदानमंत्रः ॥ अनघो हरणं नित्यं सौभाग्यबलवर्धनम् ॥ क्षीरं मङ्गलमायुष्यमतः शांतिं प्रयच्छ मे ॥ तथा ॥ शिशूनां-

जीवनं क्षीरं जिह्वे देवप्रियं सदा ॥ कान्तिदं पुष्टिदं नित्यमतः शांतिं प्रयच्छ मे इति ॥ दधिदानम् ॥ क्षीरमासमुद्भूतं देवर्षिपितृतृप्तिदम् ॥ दधि-
स्यान्मे व्रतं नित्यमतः शांतिं प्रयच्छ मे इति ॥ तक्रदानमंत्रः ॥ तक्रं द्रविसमुद्भूतं प्राणिनां तृप्तिदं परम् ॥ अतस्त्वत्प्रदानेन शान्तिरस्तु सदा ममेति ।
पुष्पदानम् ॥ मनोहराणि पुष्पाणि सदा देवप्रियाणि च ॥ अतस्तेषां प्रदानेन मम संतु सुराः प्रिया इति ॥ फलदानमंत्रः । मनोहराणि रम्याणि
नित्यं स्वादुकराणि च ॥ फलानां संप्रदानेन संततिस्त्वनन्तामेति ॥ तथा ॥ फलानि मधुराणीह मुनिदेवप्रियाणि च ॥ तस्मात्तेषां प्रदानेन स-
फला मे मनोरथा इति ॥ तांबूलदानमंत्रः ॥ सोपस्करं च तांबूलं सर्वदा मङ्गलप्रियम् ॥ प्रियं चैव तु देवानां सौगन्ध्यं वदने स्तु मे इति ॥ पादुकादा-
नमंत्रः ॥ कंटकोच्छिष्टपाषाणादृश्चिकादिनिवारणे ॥ पादुके संप्रदत्ते मे द्विजप्रीत्या प्रगृह्यतामिति ॥ उपानहदानम् ॥ उपानहौ प्रदत्ते मे कं-
टकादिनिवारणे ॥ सर्वमार्गेषु सुखदे अतः शांतिं प्रयच्छ मे ॥ छत्रदानमंत्रः ॥ इहामुत्रातपत्राणां कुरु मे केशव प्रभो ॥ छत्रं त्वत्प्रीतये दत्तं ममास्तु
च सदा शुभमिति ॥ चामरदानम् ॥ शशाङ्ककरसङ्काश हिमडिण्डिरपांडुर ॥ प्रासारयाशु दुरितं चामरामरवल्लभेति ॥ पत्रिकादानमंत्रः
रत्नकाः सर्वजंतूनां शैत्यानंदकरी शुभा ॥ देवेंद्रप्रीतये दत्ता अतः शांतिं प्रयच्छ मे इति ॥ व्यजनदानमंत्रः ॥ व्यजनं वायुदैवत्यं ग्रीष्मकाले सुखप्रदम्
अस्य प्रदानात्सकला मम संतु मनोरथा ॥ ॥ दर्पणदानमन्त्रः ॥ दर्शनेन त्वमादर्श नृणां मङ्गलदायकः ॥ सर्वसौभाग्यसत्कीर्तिर्निर्मलं ज्ञानमस्तु मे
॥ अथ कूष्मांडादिदानं भविष्ये ॥ ब्रह्महत्यादिपापघ्नं कूष्मांडं सुखसौख्यदम् ॥ कार्तिके रथसप्तम्यां दद्यात्पुण्यदिनेष्वपीति ॥ अद्येत्यामन्त्र्य

हननादिसमस्तपापक्षयपूर्वकबहुपुत्रपौत्रश्रीसौभाग्यादिसकलमनोरथावाप्तिकूष्माण्डबीजसमसहस्रसंख्याकाब्दब्रह्मलोकनिवासकामोगोत्रायशर्म-
णेसुपजितायइदंकूष्मांडफलंबहुबीजाढ्यंघृतप्लुतंतिललिप्तंमुक्ताप्रवालरत्नहैमफलतांबूलवस्त्रादियुतंगोधूमराशिस्थितंवनस्पतिदैवतंसुवर्णदक्षि-
णायुतंतुभ्यमहंसंप्रददेनममेतिद्विजहस्तेफलंदद्यात् ॥ दानमन्त्रस्तुतत्रैव ॥ ब्रह्महत्यादिपापघ्नंब्रह्मणानिर्मितंपुरा ॥ कूष्मांडंबहुबीजाढ्यंपुत्रपौ
त्रादिदृष्टिदम् ॥ मुक्ताप्रवालहैमादियुक्तंदत्तंतवद्विजअनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ इतिकूष्माण्डदानम् ॥ ॥ अथदेशविशेषेणमकर
संक्रांतौसौभाग्यवतीनांदानविशेषउक्तोहेमाद्रौव्यासेन ॥ सौभाग्यद्रव्यदानंचस्त्रीभिःकार्यंप्रयत्नतः ॥ सभर्तृकाभिःसंक्रांतौफलादीनांमृगेरवौ ॥
दानंषोडशसंख्याकमेकैकस्यफलस्यच ॥ हैमराजतकांस्यानांभाजनानियथाभवेत् ॥ वर्द्धितफलादानमंत्रः ॥ सतिलंगुडसंयुक्तंरसप्रीतिकरंशुभा
म् ॥ वर्धितंसंगृहाणेदमतःशांतिंप्रयच्छमेति ॥ सतिलगुडपिष्टग्रासदानमंत्रः ॥ मकरेर्केतुसंप्राप्तेग्रासस्तिलगुडोद्विजे ॥ दानेनपुत्रसौभा
ग्यंधनधान्यंसदास्तुमे ॥ भांडदानमंत्रः ॥ हिरण्यादीनिभांडानिपात्राणिमृन्मयानिच ॥ गृहाणेमानिवैयस्माद्भास्करःप्रीयतांमम ॥ गोधूम-
पिष्टदानमंत्रः ॥ गोधूमजनितंपिष्टंशर्करावृतसंयुतम् ॥ द्विजवर्यगृहाणत्वमतःशांतिंप्रयच्छमे ॥ ॥ शूर्पस्थार्द्रतंदुलदानमंत्रः ॥ तंडु-
लाःशालिजाःशुक्लाःसार्द्राःशूर्पेव्यवस्थिताः ॥ संप्रदानेनवैतेषांशांतिरस्तुसदामम ॥ पायसपूरितकांस्यपात्रदानमंत्रः ॥ ॥ सौभाग्यभाजनं
कांस्यंपायसाज्ञेनपूरितम् ॥ दानेनानेनसौभाग्यंशांतिरस्तुसदाममेति ॥ फलपुष्पसहितकदलीस्तंभदानमंत्रः ॥ कदलीसर्वदोषघ्नाहेमवर्णाव-

राष्टता ॥ दानेनास्याः पुत्रपौत्रसौभाग्यं चास्तु मे सदेति ॥ ॥ सौभाग्यद्रव्ययुतशूर्पदानमंत्रः ॥ सकंचुकं वस्त्रयुग्मैस्तथाकर्णावतंसकैः ॥ कंठ
सूत्रादिशूर्पस्य दानात्प्रातु शिवा मम ॥ ॥ जानकीप्रीतये शूर्पपंचकदानमंत्रः ॥ रामपत्नी महाभागे सौभाग्यद्रव्यसंस्थिते ॥ गृहाणेमानि शूर्-
पाणि सोपस्काराणि जानकि ॥ सौभाग्यभाग्यमारोग्यं सुतसौख्यं सदास्तु मे इति ॥ ॥ अथ षोडशविप्रेभ्यः सांगषोडशषोडशफलदानानि भवि-
ष्यपुराणे ॥ दानं षोडशसंख्याकमेकैकस्य फलस्य च ॥ एवं षोडशविप्रेभ्यो दत्वेप्सितमवाप्नुयादिति ॥ अद्येत्यादि० मम समस्तपापक्षयपूर्वकस्वक
लसौभाग्यस्त्रीपुत्रपौत्रादीप्सितानंतफलावाप्तये दीयमानफलसमसंख्यवर्षसहस्रावच्छिन्नदेवांगनाभिः सहभोगोत्तरानेकसुखाप्तिकामश्च नाना
नामगोत्रेभ्यः षोडशसंख्याकेभ्यः सुपूजितेभ्यः इमानि षोडशषोडशसंख्याकान्यमुकफलान्येकैकस्मै सगोधूमतांबूलफलदक्षिणायुतानि वनस्पतिदैवता
नि दातुमहमुत्सृज्ये न ममेति दत्वा प्रणमेदिति ॥ दानमंत्रः ॥ फलैः षोडशसंयुक्तं स्वर्णधान्यादिसंयुतम् ॥ द्विजवर्य गृहाण त्वं मम संतु मनोरथा इति
इति षोडशिकाफलदानम् ॥ ॥ अथ व्यतीपाते सुवर्णदानमाह ॥ हेमाद्रौ ॥ शंकुकर्णः प्रलंबोष्ठो लंबभ्रूर्दीर्घनासिका ॥ अष्टनेत्र-
चतुर्वक्त्रविस्तीर्णशतयोजन ॥ व्यतीपात नमस्तेस्तु सोमसूर्यसुतप्रभो ॥ यत्किंचिद्दीयते स्वर्णं मेरुतुल्यं तु तद्भवेदिति ॥ अद्येत्यादि० मम समस्त
पापक्षयपूर्वकहेममयहिमाचलदानसमफलावाप्त्यक्षयसुखश्रीसूर्यजनार्दनप्रीतिकामः अमुकगोत्रायशर्मणे सुपूजिताय इदं सुवर्णमग्निदैवतं सदक्षिणांतु-
भ्यमहं संददे न ममेति ॥ दानमंत्रः ॥ गुंजामात्रमिदं स्वल्पं हेम विप्र करेर्पितम् ॥ हिमाचलमिदं भूत्वा प्रीयतां मे जनार्दन इति ॥ हिरण्यगर्भ-

गर्भस्थमितिवा ॥ इतीयतीपातेसुवर्णदानमंत्रः ॥ ॥ अथाश्वत्थसेवनंभविष्यपुराणे ॥ उदकुंभप्रदानेतुअशक्तोयःपुमान्भवेत् ॥ ते-
नाश्वत्थतरोर्मूलंसेच्यंनित्यंजितात्मना ॥ सर्वपापप्रशमनंसर्वदःखविनाशनम् ॥ सर्वरोगापहंनित्यंध्रुवंसंततिवर्धनम् ॥ सेचनमंत्रः ॥ सिंचा
मितेश्वत्थमूलममसंततिवृद्धये ॥ अश्वत्थरूपीभगवान्प्रीयतांमेजनार्दनः ॥ अनेनमंत्रवर्येणसिंचेदश्वत्थमूलकम् ॥ नमस्कुर्यात्ततःसम्यक्-
प्रार्थयेच्चपुनःपुनरिति ॥ सेवनकृत्तंनपितनैव ॥ यःकरोतितरोर्मूलसेकंमासचतुष्टयम् ॥ मनोरथास्तसिद्धंरतिश्रुतिरेषासनातनी ॥ मास
चतुष्टयंचैत्रादौ ॥ वैशाखधर्मेपि ॥ अश्वत्थमूलमासिंचेत्तोयेनबहुनासदा ॥ कुलानामयुतंतेनतारितंस्यान्नसंशयइति ॥ इत्यश्वत्थसेचनं ॥
अथाथर्वणीयेअश्वत्थाभिमंत्रणं ॥ आरात्तेइत्यस्याग्निकांडांतोयोनित्वनग्निरृषिः ॥ वनस्पतिर्देवता ॥ अनुष्टुप्छंदः ॥अश्वत्थाभिमंत्रणेवि
नयोगः ॥ ओंआरात्तेअग्निरस्त्वारात्परशुरस्तुते ॥ निर्वातेत्वाभिवर्षन्तुस्वस्तितेस्तुवनस्पतेइति ॥ तेकारस्थानेमेकारःस्वयंवक्तव्यः ॥ पौराण
मंत्रस्तु ॥ अक्षिस्पंदंभुजस्पंदंदुःस्वप्नंदुर्विचिंतितम् ॥ शत्रूणांचसमुत्पन्नमश्वत्थशमयस्वमे ॥ पुराणांतरेमंत्रांतरमुक्तम् ॥ मूलतोब्रह्मरूपा
यमध्यतोविष्णुरूपिणे ॥ अग्रतःशिवरूपायअश्वत्थायनमोनमइति ॥ अश्वत्थस्पर्शस्तुमंदवासरएवकुर्यात् ॥ अन्यवासरेष्ववंनसेचनंसेवनंचदूर
तएवकुर्यादित्युक्तं ॥ पाद्मे ॥ इत्यश्वत्थसेचनविधिः ॥ अथसूर्यादीनांवैपरीत्येदानान्युक्तानिज्योतिःसागरे ॥ कौसुंभवस्त्रंगुडहेमताम्रंमाणिक्यगो
धूमसुवर्णपद्मं ॥ सवत्सगोदानमितिप्रणीतंदुष्टायसूर्यायमसूरिकाश्चेतिसूर्ये ॥ १ ॥ घृतकलशंसितवस्त्रंदधिशंखमौक्तिकंसुवर्णंच ॥ रज

तंचप्रदद्याच्चंद्रारिष्टोपशांतयेच ॥ इतिचंद्रे २॥ प्रवालगोधूममसूरिकावृषभःसताम्रःकरवीरपुष्पं ॥ आरक्तवस्त्रंगुडहेमताम्रंदुष्टायभौमाय
चरक्तचंदनम् ॥ इतिभौमे ॥ ३ । नीलंवस्त्रंमुद्गहेमंबुधायरत्नंपाचीदासिकाहेममर्पिः ॥ कांस्यंदंतंकुंजरस्याथमेषोरौप्यंसस्यम्पुष्पजात्यादि
कंच ॥ इतिबुधे ॥ ४ ॥ अश्वःसुवर्णंमधुपीतवस्त्रंसपीतधान्यंलवणंसपुष्पम् ॥ सशर्करंतद्रजनीप्रयुक्तंदुष्टायशांत्यैगुरवेप्रणीतम् । इतिगुरवे
चित्रवस्त्रमपिदानवार्चितेदुष्टगेमुनिवरैप्रणीतम् ॥ तंडुलंघृतसुवर्णरूप्यकंवज्रकंपरिमलोधवलागौः ॥ इतिशुक्रे ॥ ६ ॥ नीलकंम-
हिषंवस्त्रकृष्णंलोहंसदक्षिणम् ॥ विश्वामित्रायुतंदद्याच्छनिदुष्टप्रशांतये ॥ इतिशनौ ॥ ७ ॥ राहौदानंकृष्णमेषोगोमेदोलोहकंबलौ
सुवर्णंनागरूपंचसतिलंताम्रभाजनम् ॥ इतिराहवे ॥ ८ ॥ केतौवैडूर्यममलंतैलंमृगमदस्तथा ॥ ऊर्णातिलैस्तुसंयुक्तंदद्यात्क्लेशापनुत्तये ।
इतिकेतौ ॥ ९ ॥ इतिनवग्रहाणांदानेद्रव्याण्युक्तानि ॥ ॥ अथग्रहाणांदानानि ॥ ब्राह्मे ॥ ग्रहदानक्रमंवक्ष्येसर्वसिद्धिकरंपरम् ॥
सर्वशांतिकरंश्रुणांसर्वपापप्रणाशनमिति ॥ दानकालमपितत्रैव ॥ अयनेविषुवेचंद्रसूर्योपरागेजन्मर्क्षेभानुवासरे ॥ पंचदश्यांप्रातिकूल्येप
वयकालेपुण्यदेशेविवाहादौचदानंकार्यम् ॥ तत्रायंप्रकारः ॥ हस्तमात्रांद्विहस्तांवावेदिंकृत्वागोमयेनोपलिप्य ॥ तत्रसर्वतोभद्रंपंचरंगैर्वि-
लिख्य। वस्त्रंतत्रप्रसार्यतंडुलैस्तत्रनवकोष्ठात्मकंपद्मंकृत्वाकोष्ठेषुतंदुलैःपद्मानिकृत्वातेषुनिष्कत्रयेणयथाशक्त्यावासुवर्णप्रतिमाआदित्यादिग्रहा
णांकृत्वारदौआदित्यंमध्येकोष्ठेआग्नेयेचंद्रंदक्षिणेभौमंसौम्येबुधमुत्तरेगुरुंपूर्वेशुक्रंपश्चिमेशनैश्चरंनैर्ऋत्येराहुंवायव्येकेतुंतत्तन्मंत्रैस्तत्त्प

गंधैस्तत्पुष्पधूपदीपनैवेद्यादिभिः संपूज्य प्रार्थयेत् ॥ प्रार्थनामंत्राः ॥ पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरंगवाहः ॥ दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ॥ १ ॥ श्वेतांबरः श्वेतविभूषणश्च श्वेतद्युतिर्दंडकरो द्विबाहुः चंद्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं विदधातु देवः ॥ २ ॥ रक्तांबरो रक्तवपुः किरीटी चतुर्भुजो मेषगतो गदाभृत् ॥ धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशांतः ॥ ३ ॥ पीतांबरः पीतवपुः किरीटी चतुर्भुजो दंडधरश्च हारी ॥ चर्मासिधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधश्च ॥ ४ ॥ पीतांबरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशांतः ॥ दधाति दंडं च कमंडलुं च तथाक्षसूत्रं वरदोऽस्तु मह्यम् ॥ ५ ॥ श्वेतांबरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशांतः ॥ तथाक्षसूत्रं च कमंडलुं च दंडं च बिभ्रद्वरदोऽस्तु मह्यं । ६ । नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् ॥ चतुर्भुजः सूर्यसुतः प्रशांतः सदास्तु मह्यं वरमंदगामी । ७ ॥ नीलांबरो नीलवपुः किरीटी करालवक्त्रः करवालशूली ॥ चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोऽस्तु मह्यम् ॥ ८ ॥ धूम्रो द्विबाहुर्वरदो गदाभृत् गृध्रासनस्थो विकृताननश्च । किरीटकेयूरविभूषितांबरः सदास्तु मे केतुगणः प्रशांतः ॥ इति संप्रार्थ्य दद्यात् ॥ ९ । इति प्रार्थनामंत्राः ॥ दानमंत्राश्च ॥ ॥ अथ वासरदोषापनोदनानि ॥ संहिताप्रदीपे ॥ भानुस्तांबूलदानादपहरति हि रुजां वैकृतं वासरोत्थं सोमः श्रीखंडदानादवनिवरसुतो रक्तपुष्पप्रदानात् ॥ सौम्यः शक्तास्त्रमंत्रो हरिहरनमनाद्भार्गवः शुभ्रवस्त्रात्तैलस्नानात्प्रयाति दिनकरतनयो ब्रह्मनत्या परे चेति ॥ १ ॥ इति वारदोषापनोदनानि ॥ ॥ अथ सहस्रभोजनविधिः ॥ भविष्यपुराणे ॥ सहस्रभोजनस्येह विधिं नारायणो मुनिः ॥ सर्वं

षांचैवपुण्यानामब्रवीत्पुण्यमुत्तमम् ॥ यदाचित्तंचवित्तंचभक्तिरात्मनिजायते ॥ तदानीमेवकर्तव्यंप्रीतयेपरमात्मनः ॥ आषाढंचैवपौषंचमलमासं
तथैवच ॥ गुरुभार्गवयोरस्तंहित्वान्यस्मिन्शुभेदिने । कृत्वादौमंगलस्नानंशुद्धःसन्भार्ययासह ॥ कृत्वादौद्रव्यशुध्यर्थंप्रायश्चित्तंयथाविधि ॥
दशांशद्रव्यमादायविप्रेभ्योविनिवेदयेत् ॥ द्रव्यसंप्रोक्षयेत्पश्चात्सम्पादितन्तदाज्ञया ॥ गणेशंपूजयेत्पूर्वंमातृणांपूजनन्ततः ॥ कृत्वाभ्युदयि-
कंश्राद्धंस्वस्तिवाचनपूर्वकम् ॥ आचार्यंपूजयेत्पश्चाद्वस्त्रालङ्कारभूषणैः ॥ ऋत्विजोवरयेदष्टौवस्त्रगन्धैश्चपूजयेत् ॥ पुष्पमण्डपिकांकृत्वाचतुर
स्रांसुशोभनाम् ॥ कृत्वेशस्यसुवर्णेनप्रतिमांकर्षनिर्मिताम् ॥ सशक्तिकस्यदेवस्यभवानीशङ्करस्यच ॥ तस्याधिदेवताविष्णुर्ब्रह्माप्रत्यधिदेवता
कृत्वातुप्रतिमाशुद्धिमग्न्युत्तारणपूर्वकम् ॥ षोडशैरुपचारैश्चतत्तन्मन्त्रैःप्रपूजयेत् ॥ ऋग्भिश्चपावमानीभिरभिषिच्ययथाविधि ॥ पुष्पमण्ड-
पिकामध्येस्थापनंतण्डुलोपरि ॥ प्रतिमान्तुचसंस्थाप्यकलशेचांबरावृते ॥ समन्ताद्देवदेवस्यक्रमेणैवतुपूर्वतः ॥ तत्तन्मन्त्रेणनाम्नावापूजयेदङ्ग-
देवताः ॥ कर्णिकायांभवानीशोह्यधिप्रत्यधिसंयतः ॥ तद्बहिश्चैवचत्वारस्तद्बहिःषोडशक्रमात् ॥ एकविंशद्बहिश्चाष्टचत्वारिंशत्तथाक्रमात् ॥
पद्मस्यदलवच्छस्ताःकर्णिकाशतसंग्रहाः ॥ दिग्देवा१०ऋषयःसप्त७सागरा४भुवनत्रयम् ॥ नद्यःसप्त७गुणा३श्चैववेदा४श्चात्मेत्यनुक्रमात् ॥
अत्रपीठयन्त्रस्थापनदेवताक्रमप्रयोगंचाह ॥ आदौपद्मकर्णिकायांमध्येअधिदेवताविष्णुब्रह्मप्रत्यधिदेवतासहितंभवानीशङ्करंस्थापयेत् ॥ त-
द्बहिश्चतुर्दलपद्मेप्रादक्षिण्येनगणेश१दुर्गा२क्षेत्रपाला३भयङ्करा४ःस्थाप्याः ॥ तद्बहिस्तृतीयेषोडशदलेषोडशमातरः ॥ गौरी१पद्मा२शची३

मेधा४सावित्री५विजया६जया७ ॥ देवसेना८स्वधा९स्वाहा१०मातरो११लोकमातरः१२ ॥ धृतिः१३पुष्टि१४स्तथातुष्टि१५रात्मनःकुलदे-
वताः१६ ॥ तद्वद्धिरेकत्रिंशद्दलेवसुरुद्रादित्याः ॥ अष्टौवसवस्तु ॥ धुवो१धरश्च२सोमश्च३आपश्चैव४वाऽनिलो५नलः६ ॥ प्रत्यूषश्च७प्रभास-
श्च८वसवोष्टौप्रकीर्तिताइति ॥ एकादशरुद्रास्तु ॥ वीरभद्रश्च१शंभुश्च२योगीशो३जैकपात्तथा४ ॥ अहिर्बुध्न्यः५पिनाकीच६भुवनाधीश्वरस्त-
था७ ॥ कपाली८विट्पतिः९स्थाणु१०र्भर्गाख्यो११रुद्रसंज्ञकाइति ॥ द्वादशादित्यास्तु ॥ धाता१र्यमाच२मित्रश्च३वरुणो४शौ५भगस्तथा६ ॥
इन्द्रो७विवस्वान्८पूषाच९पर्जन्यो१०दशमस्तथा ॥ त्वष्टा११विष्णु१२रितिप्रोक्ताआदित्याद्वादशक्रमात् ॥ पंचमेष्टाचत्वारिंशद्दलआदौक्रमे-
णनवग्रहाः ॥ सूर्यः१सोमो२महीपुत्रः३सोमपुत्रो४बृहस्पतिः५ ॥ शुक्रः६शनैश्चरो७राहुः८केतवश्च९नवग्रहाइति ॥ दशलोकपालास्तु ॥ इन्द्रो१
ग्नि२र्यमो३निर्ऋति४र्वरुणो५वायु६रेवच ॥ कुबेरो७ब्रह्मा८ईशान९अनन्तो१०दशदिक्पतिरिति ॥ सप्तर्षयस्तु ॥ कश्यपो१त्रि२र्भरद्वाजो
विश्वामित्रो४थगौतमः५ ॥ जमदग्नि६र्वसिष्ठश्च७सप्तैतेऋषयक्रमात् ॥ समुद्रास्तु ॥ पूर्व१दक्षिण२पश्चिमो३त्तरा४श्चत्वारःसमुद्राइति ॥
भुवनत्रयम् ॥ भूर्लोक१भुवर्लोक२स्वर्लोका३इति ॥ सप्तसरितश्च ॥ गङ्गाच१यमुना२चैवगोदावरी३सरस्वती४ ॥ तापी५पयोष्णी६रेवाच
सप्तनद्योयथाक्रमस्मिति ॥ त्रिगुणास्तु ॥ सत्वं१रज२स्तमोगुणाइति ॥ चत्वारोवेदास्तु ॥ ऋग्वेदो१थयजुर्वेदः२सामवेदो३ह्यथर्वणः४इति ॥
आवाच ॥ इत्येतास्तत्रावाह्यपूजयेदिति ॥ इतिपीठयन्त्रेदेवतास्थापनक्रमः ॥ गन्धपुष्पादिभिश्चैवसमभ्यर्च्ययथाविधि ॥ यथाशक्तिकृतंसर्व

अर्चनंविनिवेदयेत् ॥ देवदेवजगन्नाथविश्वमातर्नमोस्तुते ॥ गृहाणेमांकृतांपूजांप्रसीदभगवन्गुरो ॥ ग्रहयज्ञविधानेनग्रहपूजांसमाप्यच ॥
ऋत्विग्भिःसहवैहोमंततःकुर्याद्यथाविधि ॥ कुंडेवास्थण्डिलेवापिस्वगृह्यविधिनाद्विजः ॥ कृत्वाज्यभागपर्यन्तमपलेपादिकन्ततः ॥ ततः ॥
समिदाज्येनचरुणायवैस्तिलसमन्वितैः ॥ सहस्रञ्चाहुतीस्तव्याहृतीभिस्ततःक्रमात् ॥ जुहुयादृत्विगेकैकश्चतुर्विंशोत्तरंशुभम् ॥ प्रणवेना-
हुतिंचैकांमन्त्रेणैवपृथक्पृथक् ॥ देवतानांचसर्वेषांनाम्भिर्जुहुयाद्घृतम् ॥ देवतानामङ्गदेवतानाम् ॥ ततःस्विष्टकृतंहुत्वाहोमशेषंसमा-
पयेत् ॥ आचार्यादीन्समभ्यर्च्यगन्धपुष्पाक्षतादिभिः ॥ दद्याद्विभवसारेणदक्षिणांचयथोचिताम् ॥ लेह्यंपेयंतथाचोष्यङ्खाद्यंचैवचषड्रसान् ॥
देवायादौनिवेद्यन्तुद्विजवर्यान्समर्चयेत् ॥ भक्ष्यभोज्यादिकंदद्यात्तृप्तिर्यस्ययथाभवेत् ॥ दक्षिणांचयथाशक्त्यासर्वेषांचसमांशतः ॥ ततश्च
भोजयेद्विप्रान्सहस्रंसम्यगेवहि ॥ एकस्मिन्नेवकालेवाभवेद्वापिदिनेदिने ॥ भवेद्यावत्सहस्रंतुतावदेवहिभोजयेत् ॥ तेभ्योपिदक्षिणांदद्या-
द्भुंजानेभ्यस्वशक्तितः ॥ दीनान्धकृपणादींश्चभोजयित्वास्वयन्ततः ॥ समाहितमनाःकर्ताभुंजीयात्सहबन्धुभिः ॥ एवंयःकुरुतेसम्यक्सहस्रद्वि-
जभोजनम् ॥ समाप्तेतुपुनर्होमःकर्तव्योमुनिरब्रवीत् ॥ ब्रह्महाचसुरापीचपरद्रव्यापहारकः ॥ मातृगामीचगोघ्नश्चपरदाररतःसदा ॥ ज्ञा-
नतोज्ञानतोवापिपापकारीयथेच्छया ॥ सदाचारविहीनस्तुदमदानविवर्जितः ॥ ईदृशोपिद्विजोयःस्यात्सहस्रद्विजभोजनम् ॥ कुरुतेसद्यए-
वेहसपुनातिनसंशयः ॥ ब्रह्मानंदपदंगच्छेत्तेनपुण्येनचैवहि ॥ सहस्रभोजनाच्चैवनानाविधमनोरथान् ॥ भुङ्क्तेसकामान्सकलान्भोगानपि-

चपुष्कलानिति ॥ तत्रसङ्कल्पमाह ॥ ममपंचमहापातकनिवृत्तिगोवधपरदारपरद्रव्यापहारकायिकवाचिकमानसिकैतच्छरीरावच्छिन्नसमस्त
पापक्षयपूर्वकनानाविधमनोरथसिद्ध्यन्तेषष्टिसहस्रवर्षविष्णुलोकनिवासांतेब्रह्मानंदावाप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसहस्रंब्राह्मणान्यथाशक्त्यायथोपपन्नेनान्नेनयथाकालंयथादेशंसदक्षिणांभोजयिष्यइतिसङ्कल्प्य ॥ तदादौगणेशपूजनंस्वस्तिवाचनंमातृकापूजनंनांदिश्राद्धंआचार्यवृत्विग्वरणहोमादिचकरिष्यइतिसङ्कल्प्यगणेशपूजनादियथोक्तक्रमेणकुर्यादिति ॥ अथसर्वस्वदानसङ्कल्पवाक्यंमात्स्ये ॥ अद्येत्यादि०ममैतच्छरीराव
च्छिन्नसमस्तपापक्षयपूर्वकसकलमनोरथसिद्धियज्ञयाजित्वसर्वद्रव्यदानजन्यसर्वतीर्थस्नानजन्यसर्वदेवपूजाजन्यसमफलयमलोकादर्शनदारिद्र्यानुत्पत्तिसर्वकालस्त्रीपुत्रपौत्रधनधान्यसौख्यायावज्जीवमवियोगैहिकामुष्मिकाष्टैश्वर्यत्ववहुगन्धर्वोपजेगीयमानदिव्याप्सरोगणसेवितदिव्याङ्गनासमाकीर्णहंससारसविहगादिपरिवृतहेमकिङ्किणीजालमालिकामण्डिततरुणादित्यसङ्काशविमानारोहणशक्रादिसुरगणब्रह्मविष्णुलोकेन्द्रलोकादिस्वेच्छयाविचरणयावदाभूतसम्प्लवाक्षयस्वर्गलोकावाप्त्यन्तेविष्णुसायुज्यत्वकामइदंसकलंममाश्रमीयंसकलवस्तुसर्वस्वंसर्वविष्णुदैवतंतत्वैवकल्पितसुवर्णवहुदक्षिणम् ॥ ॐसर्वस्वायनमइतिनाममन्त्रेणसुपूजितायतुभ्यमहंसंप्रददेनममेत्येकस्मै दद्यात् ॥ यद्वा ॥ नानानामगोत्रेभ्योब्राह्मणेभ्यःसुपूजितेभ्यःसदक्षिणांदातुमहमुत्सृज्येनममेतितेनश्रीपरमेश्वरःप्रीयताम् ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ प्रार्थनामन्त्रास्तु ॥ हरिश्चन्द्रोयथाराजासर्वंदत्वादिवङ्गतः ॥ तथाहमाश्रमंदत्वायास्यामित्रिदशालयम् ॥ दिविभुव्यन्तरिक्षेचहस्त्यश्वरथसंकुला ॥ हरिश्चन्द्रस्यनृपतेःशो-

भतेनगरीयथा ॥ तथाममाप्यमंसर्वन्द्रिविसर्वत्नगच्छतु ॥ सर्वस्वंमुनयेदत्वायाङ्कतिष्टपतिर्गतः ॥ सर्वस्वदानेनानेमतांगतिंमाप्नुयामहम् ॥ स-
र्वस्वतवदानेहरिश्चन्द्रोयथाभवत् । दुःखहीनःसुखमयस्तथामांकुरुसर्वदा ॥ सर्वस्वदानात्सकलामममसंतुमनोरथाः ॥ इतिसर्वस्वदानप्रयोगः
अथयुगप्राधान्येनव्यासोक्ताधर्मांउच्यन्ते ॥ तपःपरंकृतयुगेत्रेतायांज्ञानमुत्तमम् ॥ द्वापरेयज्ञमित्याहुर्दानमेवकलौस्मृतमिति ॥ स्कान्दे ॥
श्रांतस्ययानंतृषितस्यपानमन्नंक्षुधार्तस्यनरोनरेन्द्रः ॥ दत्वाद्विमानेनसुराङ्गनाभिःसंस्तूयमानस्त्रिदिवंप्रयाति ॥ यतीनामाह्यमः ॥ यतीना
म्परमोधर्मस्त्वनाहारोवनौकसाम् ॥ दानमेवगृहस्थानांशुश्रुषाब्रह्मचारिणामिति ॥ दानमावश्यकंकेषामित्याहव्यासः ॥ मातापित्रोश्चयद्दत्तंभ्रा
तृस्वसृसुतासुच ॥ सोदर्येपिचयद्दत्तंसोतिथिःस्वर्गसंक्रमः ॥ पितुःशतगुणंदानंसहस्रंमातुरुच्यते ॥ अनंतंदुहितुर्दानंसोदर्येदत्तमक्षयम् ॥
भविष्योत्तरेपि ॥ नकेवलंब्राह्मणानांदानंसर्वत्रशस्यते ॥ भगिनीभागिनेयानांमातुलानांपितृष्वसुः ॥ दरिद्राणांचबन्धूनांदानंकोटिगुणम्भ-
वेत् ॥ मातुर्गोत्रेशतगुणंस्वगोत्रेदत्तमक्षयम् ॥ दातुर्लक्षणमपितचैव ॥ अपाप्मारोगीधर्मात्मादित्सुरव्यसनःशुचि ॥ अनिंद्याजीवकर्माच-
षड्भिर्दाताप्रशस्यते ॥ प्रतिगृहीतृलक्षणमपितचैव ॥ त्रिशुक्लःक्षीणवृत्तिश्चघृणालुःसकलेन्द्रियः ॥ विमुक्तोयोनिदोषेभ्योब्राह्मणःपात्रमुच्यते ।
तथा ॥ सौमुख्यमभिसंप्रीतिरर्थिनांदर्शनेसदा ॥ सत्कृतिश्चानुसूयाचतदाश्रद्धेतिकीर्त्यते ॥ देवलः ॥ यद्ददातियदश्नातितद्देवधनिनांधनम् ।
अन्येमृतस्यक्रीडंतिदारैरपिधनैरपि ॥ व्यासः ॥ श्वःयावत्शतलब्धस्यप्राणेभ्योपिगरीयसः ॥ गतिरेकैवचित्तस्यदानमन्येविपत्तय ॥ ग्रासादर्ध-

मपिग्रासमर्थिभ्यः किन्नदीयते ॥ इच्छानुरूपोविभवकदाकस्यभविष्यति ॥ मात्स्ये ॥ न्यायेनार्जनमर्थस्यवर्धनंचाभिरक्षणम् ॥ सत्पात्रेप्रतिपत्तिश्चसर्वशास्त्रेषुगीयते ॥ पुनस्तत्रैव ॥ अदातायत्नयत्नेतिततत्ततस्सुदुःखितः ॥ दानात्सुखमवाप्नोतिपरत्रापिचनिर्वृतइति ॥ याज्ञवल्क्यः ॥ अन्नरद्वयमभ्यस्तंनास्तिनास्तीतियत्पुरा ॥ तदिदंदेहिदेहीतिविपरीतमुपस्थितमिति ॥ तथा ॥ द्वारन्द्वारमटंतीहमत्तुकापालपाणयः ॥ दर्शयन्त्येवलोकानामदातुफलमीदृशम् ॥ बृहस्पतिः ॥ द्वावेवाप्सुप्रवेष्टव्यौगलेबध्वादृढांशिलाम् ॥ धनवन्तमदातारंदरिद्रंचातपस्विनमिति ॥ दरिद्रस्यैवदद्यादित्याह ॥ बृहस्पतिः ॥ वृष्टिर्यथासमुद्राणांतृप्तानामशनंयथा ॥ तथादानंसमृद्धानांदत्तंभवतिनिष्फलमिति ॥ अतःपरंषोडशमहादानादीनांबहुत्वादुपरम्यतइति ॥ ॥ कालोपनामरामेशभट्टसूनोसुधीमतः ॥ महादेवद्विजार्यस्यसूनुनाप्रभविष्णुना ॥ दिवाकरेणरचितादानसंक्षेपचंद्रिका ॥ १ ॥ गिरिजाजानितुष्ट्यर्थंमुदं वितनुयात्सतामिति ॥ २ ॥ विज्ञप्रार्थना ॥ अदृष्टदोषान्मतिविभ्रमाद्वायदर्थहीनंलिखितंमयात्र ॥ तत्सर्वमार्यैःपरिशोधनीयंकोपंनकुर्यात्खलुतन्यकस्य ॥ ३ ॥ किंच ॥ शास्त्रकर्ताभवेद्व्यासोलेखकोगणनायकः तयोर्वैचलिताबुद्धिर्मनुष्याणांतुकाकथा ॥ ४ ॥ लिखनपरिश्रमवेत्ताभुवनेविद्वज्जनोनान्यः ॥ सागरलङ्घनखेदंहनुमानेकःपरंवेत्ति ॥ इतिकाश्यांश्रीमत्कालोपनामकभट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्यसूनुनाबालम्भट्टानुजदिवाकरेणविरचितादानचन्द्रिकासमाप्ता ॥

दानानिसर्वाण्यभिधायतेषांप्रतिग्रहेशुद्धिमतोभिधास्ये ॥ यथाधियाभावितयाप्रवृत्तिःप्रतिग्रहेसाधुजनस्यनस्यात् ॥ तत्रमेषोदानप्रकर्णो

दृष्टप्रतिग्रहहतोविप्रोभवतिपातकी ॥ नाभिभाषेत्ततोदत्वातन्मुखंनावलोकयेदित्यादिभविष्योत्तरे ॥ दृष्प्रतिग्रहदग्धस्यविप्रस्यकिलभारत
नपश्येद्वदनंपस्मान्नचैनमभिभाषयेदिति ॥ महाभारतेच ॥ पूजकोगणकोव्यासोघोरग्राहीतथैवच ॥ परास्थिवाहकोवैद्योग्रामयाजीतथैवच
एतेचान्त्यसमालोकेनस्पृष्टव्याःकदाचन ॥ कदाचिन्मोहतःस्पृष्टःसवासाआप्लुतःशुचिरिति ॥ पराशरस्मृतौ ॥ मंत्रेणानेनदत्वातंप्रणिपत्यच
माप्यच ॥ आशीमान्तमनुव्रज्यतन्मुखंनावलोकयेदिति ॥ महार्णवेचदृष्टप्रतिग्रहःस्पष्टः ॥ प्रतिग्रहदृष्टत्वंचतुर्धा ॥ दातृकालदेशप्रतिग्रा
ह्यदोषभेदात् ॥ चाण्डालत्वपतितत्वादयोदातृदोषाः ॥ कुरुक्षेत्रत्वादयोदेशदोषा ॥ चन्द्रसूर्योपरागादयःकालदोषाः ॥ उभयतोमुखीत्वमेषीत्वा
दयोदेयदोषाः ॥ तिलधेनुर्गजोवाजीमाहिषाजिनमर्तयः ॥ सुरभिःसूयमानाचघोराःसप्तप्रतिग्रहाइतिनिषेधात् ॥ प्रेतान्नमजिनंमणिरितिपा
ठेप्रेतान्नमेकादशाहिकश्राद्धान्नभोजनम् । मणिःशालिग्रामइतिहेमाद्रिः ॥ तत्रैवतन्निषेधोरुद्रस्मृतौ ॥ परमापद्गतेनापिअन्त्यजातिप्रतिग्रहः ॥
नकार्योब्राह्मणेनेहआत्मनःश्रेयइच्छया ॥ प्रतिग्रहाद्यान्त्यजातेःपतितत्वंप्रजायतेइति । अन्त्यजानाह । मनुः ॥ रजकश्चर्मकश्चैवनटोबुरुडएवच ॥
कैवर्तमेदभिल्लाश्चसप्तैतेअन्त्यजाःस्मृताइति । चाण्डालानाह ॥ व्यासः ॥ ब्राह्मण्यांशूद्रजातश्चचाण्डालस्त्रिविधःस्मृतइति ॥ तथा ॥ कुरु-
क्षेत्रेप्रतिग्राहीनभूयःपुरुषोभवेत् ॥ गायत्रीमनुजाप्येनसप्तलक्षंभवेच्छुचिरिति ॥ कालदोषभिन्नोसत्प्रतिग्रहनिषेधस्तत्प्रतिग्रहप्रायश्चित्तकथ-
नेनस्पष्टः ॥ सर्वासत्प्रतिग्रहेप्रायश्चित्तंषट्त्रिंशन्मते ॥ देव्यालयजपेनैवशुद्ध्यतेसत्प्रतिग्रहादिति ॥ जपित्वात्रीणिसावित्र्याःसहस्राणिसमा

हितइति ॥ मनुक्तंतु त्रिविप्रकारेणप्रतिग्रहस्याशक्तविषयम् ॥ तेनपतितादिभ्योदुष्टदेशकालयोरदुष्टद्रव्यप्रतिग्रहेषट्त्रिंशन्मतोक्तम् ॥ दश
प्राजापत्यरूपम्पतितादिभ्योमहिष्यादिप्रतिग्रहेयाज्ञवल्क्योक्तमितिविज्ञानेश्वरः ॥ स्मृत्यर्थसारे ॥ सर्वत्रानुक्तौदानदेयकालद्रव्येष्वदुष्टेपि-
द्वादशनिष्कप्रमाणद्रव्यप्रतिग्रहेकार्यम् ॥ एवंसर्वत्र ॥ द्रव्यानुसारप्रायश्चित्तवृद्धिह्रासौकल्प्यौ ॥ दातृदेशकालद्रव्येष्वन्यतरदोषेएकैकगु-
णवृद्धिः ॥ मणिवासोगवादीनामन्यतरप्रतिग्रहेगायत्र्यष्टसहस्रजपः ॥ भिक्षादिप्रतिग्रहेपुण्यमन्त्रोच्चारणम् ॥ नचप्रतिग्रहनिषेधत्वात्क-
थंप्रायश्चित्तविधिरितिवाच्यम् ॥ प्रतिग्रहेणविप्राणांब्राह्मंतेजःप्रतिग्रहइत्यरुणस्मृत्याप्रायश्चित्ताख्यानेनचतत्कथनात् ॥ प्रतिग्रहसमर्थोपि-
प्रसङ्गन्तत्रवर्जयेदितिस्पष्टमेवनिषेधसत्त्वाच्च ॥ प्रायश्चित्तंचप्रतिगृहीतसर्वद्रव्यन्त्यक्त्वैवकार्यम् ॥ सतिद्रव्यप्रायश्चित्ताधिकाराभावादितिस्मृत्य-
र्थसारादयः ॥ अरुणस्मृतौतु ॥ षष्ठांशद्वादशांशपरित्यागौवैकल्पिकावुक्तौ ॥ तथा ॥ प्रतिग्रहाच्चषष्ठांशंवाणिज्याच्चतृतीयकम् ॥ कृषे-
र्विंशतिमंभागंत्यजतोनास्तिपातकम् ॥ प्रतिग्रहःकुत्सितानांत्रिभिःकृच्छ्रैर्विशुध्यति ॥ रथोवाजीचमहिषीतिलधेनुर्गजोजिनम् ॥ स्वयमानाच-
सुरभीर्वीराःसप्तप्रतिग्रहाइति ॥ एतेषांप्रतिग्रहेआहिताग्नेःप्राजापत्येष्टिः ॥ स्मार्ताग्निमतश्चरुस्तद्देवताकः ॥ अनग्नेःअन्येषांचकृच्छ्रत्रयम् ।
अरुणस्मृतौ ॥ गुडधेन्वादिधेनूनांप्रायश्चित्तंतथोच्यते ॥ प्रतिग्रहेचरेद्विप्रःप्राजापत्यमतन्द्रितः ॥ जपेच्चपौरुषंसूक्तमप्सुदैवाघमर्षणम् ॥
अहोरात्रस्थितश्चैवमुच्यतेतेनकिल्बिषात् ॥ अयुतंजपसंख्या ॥ गृहदानंमहादानंनास्तिदानंगृहात्परम् ॥ येनदत्तेनवैतेनसर्वंदत्तंभवेन्न-

णाम् ॥ गृहोपस्करणांसर्वंगोमहिष्यादिभूषणाम् ॥ कण्डणीपेषणीचुल्लिरुदकुंभस्तुमार्जनी । शय्याविभाजनंछत्रम्भितानंरथगोदृषम् ।
तत्रकृच्छ्रंचरेद्विप्रोमहासान्तपनंतथा । शतंवाभोजयेद्विप्रान्गायत्रीलक्षमेवच ॥ प्रायश्चित्तेकृतेविप्रोमुच्यतेतत्प्रतिग्रहात् ॥ प्रायश्चित्तस्याकरणा
य् वैवमृयतेतुसः ॥ अश्वप्रतिग्रहंकृत्वाचरेच्चान्द्रायणव्रतम् ॥ अश्वस्यविक्रयंकृत्वाप्येतदेवव्रतंचरेत् ॥ कपिलाविक्रयंकृत्वाचरेच्चान्द्रायणत्रयम् ।
गोशतंगोसहस्रंवकृष्णावैतरणीतथा ॥ चतस्रश्चैवगावस्तुवर्जनीयाःप्रयत्नत ॥ चतस्रउत्क्रान्तिकृष्णापापघ्नोत्तधेनवः ॥ गृहीत्वावैतरणींलो
हयमदंडभयावहम् ॥ प्राजापत्यत्रयंकुर्यात्भोजयेच्चशतन्द्विजान् ॥ जपेद्वावामदेव्यंचशिवसङ्कल्पमेवच ॥ रथंतरंवामदेव्यंजपेन्मुच्येतकि-
ल्बिषात् ॥ यत्तुकर्मणियाधेनुव्रतधेनुस्तथैवच ॥ मधुपर्केचयाधेनुर्याधेनुःकर्मसिद्धये ॥ एतत्प्रतिग्रहेविप्रप्रायश्चित्तंनविद्यते ॥ पर्वतायेद-
शप्रोक्तातथैवद्विमुखीचगौः ॥ उष्ट्रप्रतिग्रहेविप्रःजपेन्मासचतुष्टयम् ॥ प्राजापत्येनकृच्छ्रेणषष्टांशंतुपरित्यजेत् ॥ विप्रेभ्योदद्यात् ॥ जपे-
द्वादशलक्षंवांगायत्र्याःसायभोजनः ॥ शतेनमुच्यतेपापाद्विप्राणांभोजनेनच ॥ शतंब्रह्मकूर्चसमन्वितम् ॥ रथप्रतिग्रहेलक्षगायत्रीजपमाच
रेत् ॥ अयुतंवाथगायत्र्याःसङ्गमेस्नानमाचरेत् ॥ षडंशंतुपरित्यज्यब्राह्मणान्भोजयेच्छुचिः ॥ प्रतिगृह्यान्यदानानिप्रायश्चित्तंयथोदितम् ।
जपेन्निरन्तरदेवींवैष्णवंव्रतमाचरेत् ॥ जपसंख्याअयुतादि ॥ विद्यादानंगृहीत्वापियत्किञ्चित्पुस्तकादिकम् ॥ ब्राह्मणान्भोजयेद्धत्वाकृच्छ्र
मेकंसमाचरेत् ॥ पृथिवींप्रतिगृह्याथसशैलवनकाननाम् ॥ अपिधातुमयागृह्यतप्तकृच्छ्रत्रयंतथा ॥ भूलाविषवणांस्नायीजपेन्मासचतुष्टयम् ॥

एवंशुद्धिमवाप्नोतिद्विजःषष्टांशमुत्सृजेत् ॥ इदंचसदक्षिणप्रतिग्रहे ॥ तद्रहितप्रतिग्रहेतुनदोषः ॥ भूमिंयःप्रतिगृह्णातियस्तुभूमिंप्रयच्छति ।
तावुभौपुण्यकर्माणौनियतंस्वर्गगामिनावित्युक्तेः ॥ अथषोडशमहादानेषुतत्रचारुणस्मृतौ ॥ तुलापुरुषभागंचगृहीत्वाचान्द्रकंचरेत् ॥
हिरण्यगर्भंचतथाब्रह्मांडेकल्पपादपे ॥ जलेनिमग्नस्तायोचरेत्सांतपनद्वयम् । गोसहस्रप्रतिग्राहीयदाविप्रोह्यकामतः ॥ गोमूत्रयावकाहारो
मासेनैकेनशुद्ध्यति ॥ हिरण्यकामधेन्वादिदानमत्रयथोदितम् ॥ महाभूतघटांतेषुप्रायश्चित्तमथोच्यते । गायत्र्यादशलक्षैश्चप्राणायामसह
स्रकैः ॥ नश्यन्तिपापसंघाश्चकाकथादुष्प्रतिग्रहे ॥ पावमानंचसूक्तंत्रैसर्वपातकनाशनम् ॥ अत्रायमभिसन्धिः ॥ आयुष्यमितिसूक्तेनमणिं
कंठेप्रतिमुच्येत्यादिसूत्रेषुअखिलामपिविनियोगदर्शनात् ॥ तेषामपिप्रामाण्यबलात् ॥ पावमानीजपस्याखिलेषुविधानात्तत्तत्फलापेक्षायांगो-
घ्नान्मातृपितृवधादित्यादिमन्त्रवर्णेनतत्तत्पातकनाशस्यफलत्वावगत्यातत्तत्पापेषुपावमानीजपस्यप्रायश्चित्तत्वंपापानुरोधेनचजपसंख्याकल्पनी
येतिदिक् ॥ ॥ अथराजप्रतिग्रहप्रायश्चित्तम् ॥ अनापदिराजप्रतिग्रहंनिंदतियाज्ञवल्क्यः ॥ नराज्ञःप्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्ति
नः ॥ प्रतिग्रहेशूनीचक्रीध्वजीवैश्यानराधिपाः ॥ दशदशगुणंपूर्वंपूर्वादेतेयथोत्तरमिति ॥ संवर्तः ॥ राजप्रतिग्रहोघोरोमध्वास्वादोवि-
षोपमः ॥ पुत्रमांसंवरंभोक्तुंनतुराजप्रतिग्रहइति ॥ स्कांदे ॥ मरुदेशेनिरुदकेब्रह्मरक्षस्त्वमागतः ॥ राजप्रतिग्रहात्पुष्टःपुनर्जन्मनविंदति
ब्राह्मण्यंयःपरित्यज्यद्रव्यलोभेनमोहितः ॥ विषयामिषलुब्धस्तुकुर्याद्राजप्रतिग्रहम् ॥ नरकेरौरवेघोरेतस्यैवपतनंध्रुवम् ॥ इच्छादावाग्नि-

नादग्धाःप्ररोहंतिवनागमे ॥ राजप्रतिग्रहाद्दग्धानप्ररोहंतिकेनचिदितिविष्णुधर्मोत्तरे ॥ दशसूनासमश्चक्रीदशचक्रसमोध्वजी ॥ दशध्वजी
समावेश्यादशवेश्यासमोनृपः ॥ दशसूनासहस्राणियोवाहयतिसौनिकः ॥ तेनतुल्यःस्मृतोराजातस्माद्घोरःप्रतिग्रहइति ॥ इत्यधार्मिकराज-
विषयेनिंदा ॥ तथाचतत्रैवलिखितम् ॥ येषांनविषयेप्रीतिर्यज्ञैर्यज्ञपतेर्हरेः ॥ यत्रयेभूभुजांतेषामेतत्सूनोदितंफलम् ॥ येषांपापधिसङ्की
र्णंराष्ट्रनब्राह्मणोत्कटम् ॥ एतेसूनासहस्राणांदशानांभोगिनोनृपाः ॥ येषांनयज्ञपुरुषःकारणंपुरुषोत्तमः ॥ तेतुपापसमाचाराःसूनापा-
पौघभागिनइति ॥ अदुष्टात्तुराज्ञःप्रतिग्रहोननिंदितः ॥ अतएवोक्तंछंदोगशाखायाम् ॥ प्राचीनशालादीन्महामुनीन्राजप्रतिग्रहेप्रवर्तत
इतिअश्वपतिनामकेनराज्ञादोषाभावउपन्यस्तः ॥ नमेस्तेनोजनपदेनकुर्यान्नमद्यपः ॥ नाहिताग्निर्नाविद्वानस्वैरिणीकुतइतियाज्ञवल्क्य-
वचनेपिराजप्रतिग्रहनिंदायांलुब्धस्योच्छास्त्रवर्तिनइतिराजविशेषणाददुष्टराजप्रतिग्रहोननिंदितइतिगम्यते ॥ तथा ॥ नारदोपि ॥ श्रे-
यान्प्रतिग्रहोराज्ञानान्येषाब्राह्मणादृते ॥ ब्राह्मणाश्चैवराजाचद्वावप्येतौधृतव्रतौ ॥ नैतयोरन्तरङ्किंचित्प्रजाधर्माभिरक्षणे ॥ शुचीनामशु-
चीनांचसन्निवेशोयथांभसाम् ॥ समुद्रेसमतांयातितद्वद्राज्ञांधनागमः ॥ यथाग्नौसंस्थितंचैवशुद्धिमायातिकांचनम् ॥ एवन्धनागमःसर्वःशुद्धि
मायातिराजनीति ॥ राजप्रतिग्रहेप्रायश्चित्तमाह ॥ वृद्धहारीतः ॥ राज्ञःप्रतिग्रहंकृत्वामासमप्सुसदावसेत् ॥ षष्ठेकालेपयोभक्षःपूर्वे
मासेप्रमुच्यते ॥ तर्पयित्वाद्विजान्कामैःसततंनियतव्रतइति ॥ तदसत्प्रतिग्रहविषयमितिमाधवः ॥ अथरहस्यप्रायश्चित्तानि ॥ याज्ञवल्क्यः

अनभिख्यातदोषस्तु रहस्यव्रतमाचरेदिति ॥ कर्तृव्यतिरिक्तैर्यदीयोदोषोनज्ञायतइत्यर्थः ॥ अतश्चपारदार्यादेरपिसौ ॥ प्रथांनाख्यामितरेणा-
ज्ञातस्यरहस्यतास्त्येव ॥ तस्यप्रायश्चित्तमपिरहस्यमेवकर्तव्यम् ॥ तथाचहारीतः ॥ रहस्येरहस्यंप्रकाशेप्रकाशमितितच्चरहस्यानांसाधारणप्रा
यश्चित्तमनुराह ॥ वेदाभ्यासोन्वहंशक्त्यामहायज्ञक्रियाक्षमाः ॥ नाशयन्त्याशुपापानिमहापातकजान्यपि ॥ यथैधस्तेजसावन्हिःप्राप्तंनिर्दह-
तिक्षणात् ॥ तथाज्ञानकृतम्पापंकृत्स्नंदहतिवेदवित् ॥ सव्याहृतिकप्रणवाःप्राणायामास्तुषोडश ॥ अपिभ्रूणहतंमासंपुनन्त्यहरहःकृताइति
वसिष्ठः ॥ यच्चकार्यकृतंसाग्रंशतंवेदैस्यधार्यते ॥ तत्सर्वंतस्यवेदाग्निर्दहत्यग्निरिवेंधनम् ॥ यमः ॥ सहस्रपरमांदेवींशतमध्यांदशावराम् ॥
गायत्रींसंजपेन्नित्यंमहापातकनाशनीमिति ॥ सूत्रेशौनकः ॥ ऋग्वेदमभ्यसेद्यस्तुयजुःसामाथवापिवा ॥ सूक्तानिसरहस्यानिअथर्वाङ्गिरसस्तथा।
ब्राह्मणानिचकल्पांश्चषडङ्गानितथैवच ॥ इतिहासपुराणानिदेवतास्तवनानिच ॥ जप्त्वापापैःप्रमुच्येतधर्मस्यानेतथापरैरिति ॥ कौर्मे ॥
जपस्तपस्तीर्थसेवादेवब्राह्मणपूजनम् ॥ ग्रहणादिषुकालेषुमहापातकशोधनम् ॥ पुण्यक्षेत्राभिगमनंसर्वपापप्रणाशनम् ॥ देवताभ्यर्चनंनृ-
णांसर्वपापप्रणाशनम् ॥ अमावास्यातिथिंप्राप्ययःसमाराधयेद्ध्रुवम् ॥ ब्राह्मणान्भोजयित्वातुसर्वपापैःप्रमुच्यते ॥ कृष्णाष्टम्यांमहादेवंतथाकृ
ष्णाचतुर्दशीम् ॥ सम्पूज्यब्राह्मणमुखेसर्वपापैःप्रमुच्यते ॥ त्रयोदश्यांतथारात्रौसोपहारन्त्रिलोचनम् । दृष्ट्वेशंप्रथमेयामेमुच्यतेसर्वपातकैः ॥
एकादश्यांनिराहारःसमभ्यर्च्यजनार्दनम् ॥ द्वादश्यांशुक्लपक्षस्यसर्वपापैःप्रमुच्यते ॥ उपोषितश्चतुर्दश्यांकृष्णपक्षेसमाहितः ॥ यमायधर्मरा-

जायमृत्यवेचान्तकायच ॥ वैवस्वतायकालायसर्वभूतक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायवैक्रमात्-
चतुर्दशैतेमन्त्राःस्युःचतुर्थ्यंतानमोन्विताः ॥ प्रत्येकंतिलसंमिश्रांदद्यात्सप्तोदकांजलीन् ॥ स्नात्वानद्यांतुपूर्वाह्णेमुच्यतेसर्वपातकैरिति ॥ तथा-
तत्रैवाध्यायांतरे ॥ अस्मिन्कलियुगेघोरेलोकाःपापानुवर्तिनः ॥ भविष्यन्तिमहाबाहोवर्णाश्रमविवर्जिताः ॥ नान्यत्पश्यामिजंतूनामुक्त्वावारा
णसींपुरीम् ॥ सर्वपापप्रशमनंप्रायश्चित्तङ्कलौयुगइति ॥ इतिरहस्येषुसाधारणप्रायश्चित्तानि ॥ ॥ अथप्रतिपदोक्तप्रायश्चित्तानि। याज्ञ-
वल्क्यः ॥ त्रिरात्रोपोषितोजप्त्वाब्रह्महात्वघमर्षणम् ॥ अन्तर्जलेविशुध्येतगांचदद्यात्पयस्विनीमिति ॥ मनुः ॥ हविष्यांतीयमभ्यस्यनत-
मंहइतीतिच ॥ जप्त्वाचपौरुषंसूक्तंमुच्यतेगुरुतल्पगइति ॥ हविष्यान्तमजरंस्वर्विदीत्येकोनविंशर्चम् ॥ नतमंहोनदुरितंसप्तर्चम् ॥ इति-
वाइतिमेमनचयोदशर्चम् ॥ सहस्रशीर्षेतिषोडशर्चम् ॥ एतेषांचतुर्णांसूक्तानांअन्यतमंप्रत्यहंषोडशकृत्वोमासंजपित्वा ॥ अकामतोगुरुत-
ल्पगःशुध्यतीतिविज्ञानेश्वरादिसम्मतोर्थः । मूलेशौनकः ॥ अतोदेवाजपेत्सूक्तमग्नआयूंषिपातृचा ॥ अघमर्षंचवाजप्त्वामुच्यतेब्रह्मह-
त्ययेति ॥ इतिश्रीमत्कालोपनामकभट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्यसूनुभट्टदिवाकरविरचितदानसंक्षेपचन्द्रिकायांसद्रस्पतिग्र-
हप्रायश्चित्तानिकाम्यानिरूपितानि ॥ इतिस्मृत्यर्थसारोक्तरहस्यप्रायश्चित्तानिनिरूपितानि ॥ ॥ अथस्मृत्यर्थसारोक्तरहस्यप्रायश्चित्तानिक-
र्तृत्यतिरिक्तोवरदोगुरहस्यंप्रायश्चित्तंचरेत् ॥ अविद्वांस्तुमुखाद्गुरोरहस्यप्रायश्चित्तंज्ञात्वाचरेत् ॥ स्त्रीशूद्राश्चैवंजपहोमवर्ज्यम् ॥तथा

हारविशेषानुक्तौपयःप्रभृतयः ॥ कालविशेषानुक्तौवत्सरादयोमासान्ताः ॥ देशविशेषानुक्तौशिलोच्चयादयोगौतमोक्ताः ॥ जपेतुऋषिदैवत-
छंदोविनियोगाविज्ञेयाः। अमत्याब्राह्मणवधेनत्रिराचमन्तर्जलेनिमज्ज्यऋतंचसत्यंचेत्यघमर्षणसूक्तमावर्त्य त्रिराचांतेपयस्विनींगांदत्वाशुद्ध्येत्
दानाशक्तौ ॥ सव्याहृतिकाःषोडशप्राणायामाः । प्रतिदिनंमासमावर्त्य ॥ अभ्यासेतुत्रिंशद्राचंव्रतस्थः ॥ प्राणायामैस्त्रांतेघमर्षणंजपेत् ॥
महापापैशुद्ध्येत् । मत्याचेत्प्राग्वानिष्क्रम्यस्नायादिति ॥ इतिसंक्षेपदानचन्द्रिकासमाप्तम् ॥

श्रीकाशीपुरीमे महल्ला घुघुराना श्यामाकीगली श्रीयुत् बाबू साहेब बाबू हरखचन्द्र जीके बाडेमें दाऊ अग्निहोत्रीके
गणेशयन्त्रालयमें दानचन्द्रिका मुद्रित हुआ कम्पोज़किया श्यामाजीने छापनेवालाघुरविन जिसेलेनाहो उसेढुन्दिराज
गनेशपरदाऊ पोथीवालेके दुकानमें मिलेगी सम्वत् १९ १८ मिती॰चैत्र॰सुदी १० वार शनि सुभमस्तु